अक्टोबर् 2006
Rs. 13 /-



संस्कृत

# चन्दमामा

आ षष्टेः वर्षेभ्यः विज्ञानविनोदयोः प्रकाशयित्री प्रसारयित्री च विशिष्टा पत्रिका



चन्दमामा सम्पुटः - २२ अक्टोबर् - २००६ सञ्चिका - १०



## एतस्य अङ्कस्य विशेषाः

## अन्तरङ्गम्















### ग्राहकशुल्कम् -

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited नाम्ना प्रेष्यताम् -


**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org


### ग्राहकशुल्कविवरणम्

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

### विज्ञापिकादानार्थं सम्पर्क्यताम् -


**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399
Fax: 044-22312447, Mobile: 98412-77347
email : advertisements @ chandamama.org
**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184
Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -
चक्रपाणिः, बि. नागिरेड्डिः च

# व्यर्थतावारणेन अभावारणम्

अद्यतने समाजे बहुषु प्रसङ्गेषु भोजनसमये परिवेषितानि खाद्यानि अवशेष्य व्यर्थं क्षिप्यन्ते बहुविधानि । एतत् दृश्यं बहुत्र पश्यामः वयम् । अक्टोबरमासे १६ दिनाङ्के 'विश्वाहारदिनम्' आचर्यते । जगति कुत्रचित् आहारस्य महान् अभावः न दृश्यते । किन्तु पुनः अन्येषु केषुचित् स्थानेषु जनाः आहारस्य अनुपलब्धेः कारणात् म्रियमाणाः दृश्यन्ते ! एतेन विरोधाभासेन महत् आश्चर्यम् एव अनुभूयते । अत्र प्रधानं कारणं - आहारस्य व्यर्थीकरणम् । आहारस्य क्षेपणात् - अपेक्षमाणेभ्यः दानस्य निराकरणं कृतम् इव । एषा वस्तुस्थितिः । क्षिप्यमाणस्य आहारस्य अर्धांशः बालानां स्थालिकातः एव भवति । अत्र दोषभाजः तेषां पोषकाः एव इति स्मरणीयम् अस्माभिः ।

बालैः इष्टस्य पदार्थस्य सज्जीकरणं गृहसदस्यानां कृते कष्टाय न भवति । किन्तु तस्मिन् स्तरे वर्धमानानां बालानां कृते पौष्टिकाहारदानम् अपि निश्चेतव्यम् ।

मातुः तेरेसावर्यायाः जीवनस्य काचित् घटना एवम् अस्ति - स्वस्य सम्माननावसरे आयोजिते कस्मिंश्चित् भोजनोत्सवे सा परित्यक्तं भोजनं सङ्ग्रहीतुम् उद्युक्ता अभवत् । एतत् दृष्ट्वा तत्रत्याः सर्वे सङ्कोचपूर्णाः अभवन् । भावुका सती सा तान् उक्तवती - 'एतादृशस्य आहारस्य दर्शनम् अपि येषां दुर्लभं तादृशाः बहवः जीवन्ति अस्मान् परितः । एतत् सदा स्मरन्ती अहं कदापि आहारस्य व्यर्थीकरणं न इच्छामि' इति । एतादृशीः घटनाः बालान् कथयन्तु कृपया । बालाः आहारं व्यर्थं न कुर्मः इति सङ्कल्पं कुर्वन्ति चेत् तदेव तस्याः सम्मानः भवेत् । निर्गतिकेषु सहृदयता अपि दर्शनीया इति युवसन्ततिं सूचयति एषा घटना ।

सम्पादकः - विश्वम्





# वाचकानां पुटोऽयम्

## तन्वी डी.गोर, कच्छ

गतेभ्यः आ बहुभ्यः वर्षेभ्यः चन्दमामा अस्माकं गृहं प्रति आगच्छन्ती एव अस्ति । कथानां पठनेन अस्माकं चिन्तनसामर्थ्यं प्रवृद्धं भवति । तेन सह सर्जनात्मकं कौशलम् अपि प्रवर्धते । अत्र दृश्यमानानि चित्राणि वयं बहु इच्छामः । वर्णमयी चन्दमामा अस्माकं प्रीतिपात्रम् अस्ति ।

## करणचन्दः मेरठतः

षष्टिवर्षात्मकेन जीवनानुभवेन चन्दमामा शोभावती जाता अस्ति । एषा सरलया भाषया भारतीयसंस्कृतेः वैभवं कथयति, पौराणिकम् ऐतिहासिकं च लोकं प्रापय्य अस्मान् आश्चर्य-सागरे मज्जयति च । आबालवृद्धं सर्वेऽपि एतं पठित्वा आनन्दसागरस्य तरङ्गेषु प्लवमानाः भवन्ति । आगामिनि काले एषा स्वीयेन प्रकाशेन सर्वत्र ज्ञानं विज्ञानं च प्रसारयेत् । पौराणिक्यः लौकिक्यः च कथाः, चित्रशीर्षिकास्पर्धा, ज्ञानवर्धकानि बहुविधानि शीर्षकाणि च अत्र भवन्ति । तेषां दर्शनं पठनं च विना स्थातुम् अहं न शक्नोमि ।

मासारम्भे अस्माभिः यद्यपि बहवः पत्रिकाः क्रीयन्ते, तथापि आदौ तु पठ्यते - चन्दमामा एव । एतस्याः पठनेन या तृप्तिः भवति तया मनः निश्चिन्तं भवति । जुलैमासस्य मुखचित्रं तु अत्यन्तम् आकर्षकम् अस्ति । बालानां कृते कश्चन विशेषाङ्कः प्रकाशितः भवतु इति अस्माकं महती अभ्यर्थना ।

## राहुलः हुब्बल्लितः

अधिकैः जनैः, विशिष्य बालैः, पठ्यमाना उत्तमा पुरातनी च पत्रिका प्रायः चन्दमामा एका एव । विशिष्टेन विन्यासेन, विभिन्नाभिः कथाभिः च एषा पत्रिका युवजनताम् अपि पठनाय, ज्ञानाय च प्रेरयति । चन्दमामा नित्यनूतना भवतु, राष्ट्रियभावं विश्वमानवभ्रातृत्वं च एवमेव वर्धयतु इति आशासे ।

## रामहरिः यू. घाल्वः लोनावळतः

अगस्त्मासस्य अङ्के प्रधानमन्त्रिणः सन्देशः मुद्रितः आसीत् । तं पठित्वा मम बालौ रजनी, रोहितः च उक्तवन्तौ यत् आन्तरिकबाह्यभयोत्पादनस्य सम्मुखीकरणे भवता सह वयम् अपि स्मः इति । मुद्रणमाध्यमेन चन्दमामा बालानां, राष्ट्रस्य च मध्ये भावनात्मकसम्बन्धस्य प्रवर्धने महत्त्वोपेतं पात्रं वहति ।



# रुचिराजः

नन्दनवनग्रामस्य भूस्वामिनः गृहे लक्ष्मीपतिनामकः कश्चन पाचकः आसीत् । तस्य पाकस्य विषये जनानाम् अभिप्रायः आसीत् यत् रुचिकरः पाकः नाम लक्ष्मीपतेः एव, नान्यस्य इति । बहूनि वर्षाणि यावत् पाककार्यं कृतवान् सः वार्धक्ये स्वग्रामे एव विश्रान्तजीवनं कर्तुम् इच्छन् ग्रामं प्रति गतः ।

ग्रामे तस्य जीवनं शान्तिमयम् आसीत् । किन्तु भोजनसमये प्रतिदिनमपि सः पत्न्याः पाके कमपि दोषं पश्यन् 'लवणम् अधिकम्', 'कटुता न्यूना' इत्यादिकं वदन् भवति स्म । तस्य सारस्वतः नाम कश्चन पौत्रः आसीत् । मातापितृभ्यां विहीनः सः पितामहस्य एतां प्रवृत्तिं सावधानं पश्यति स्म ।

कानिचन दिनानि अतीतानि । लक्ष्मीपतिः दिवङ्गतः अभवत् । इदानीं गृहे उभौ एव । एकः सारस्वतः, अपरा लक्ष्मीपतेः पत्नी । पितामहस्य आक्षेपवचनानि इदानीं पौत्रस्य मुखात् निस्सरन्ति स्म । 'शाके लवणं न योजितं', 'व्यञ्जनं मुखे स्थापयितुम् अयोग्यम्' इत्यादीनि वाक्यानि पौनःपुन्येन वदति स्म सः ।

पितामही पौत्रस्य व्यवहारं पश्यन्ती 'एषः अपि पितामहसदृशः एव' इति भावयन्ती तूष्णीं तिष्ठति स्म । मातापितृविहीनः बालः एषः इति मत्वा सा किमपि अनुक्त्वा रुचिकरं पाकं कृत्वा परिवेषयति स्म । अस्मात् कारणात् सारस्वतोऽपि अलसः भूत्वा किमपि कार्यम् अकुर्वन् प्रतिदिनं भोजनप्रियः सन् कालं यापयति स्म ।

ग्रामीणाः तं 'वृकोदर' इति कथयन्ति स्म । 'एषः यावत् भुङ्क्ते तावत् भोक्तुं कोऽपि अन्यः न समर्थः, एतस्य यावत् आलस्यं तावत् अन्यस्य कस्यापि भवितुं न अर्हति' इति ते परस्परं वदन्ति स्म ।

क्षेत्रादिकं किञ्चित् आसीत् इति कारणात् तद्ग्रामीणस्य कस्यचन पुरोहितस्य पुत्र्या शारदया सह तस्य विवाहोऽपि सम्पन्नः । विवाहदिने भोजनार्थम् उपविष्टः सारस्वतः



पाकविषये बहुधा आक्षेपान् कृतवान् । तदा श्वशुरः 'जामाता भोजनप्रियः' इति ज्ञात्वा बहुविधानि भक्ष्याणि कारयित्वा भोजितवान् ।

पक्षानन्तरं सारस्वतः पत्नीं गृहम् आनेतुं श्वशुरगृहं गतवान् । रात्रौ भोजनसमये 'एतत् किं व्यञ्जनम् इति उच्यते ? किञ्चित् हरित-मरीचिका योजिता चेत् एतस्य रुचिः अन्यादृशी एव अभविष्यत्' 'पायसे कर्पूरं योजितं चेत् तस्य रुचिरेव अन्या स्यात्' 'अहो एषः अपूपः किमर्थं मृदुः नास्ति ?' इत्यादीनि वचनानि वदन् पाकशास्त्रे स्वस्य प्रावीण्यं प्रदर्शितवान् सः ।

शारदायै पत्युः एषः व्यवहारः न अरोचत । तथापि सा मौनम् आश्रितवती । रात्रौ शयनसमये शारदा क्षीरं दत्तवती तस्मै । किञ्चित्क्षीरं पीत्वा – ''क्षीरे एला यदि योजिता स्यात् तर्हि एतस्य रुचिः अपूर्वा अभविष्यत्'' इति उक्तवान् सारस्वतः ।

शारदा पत्ये कुपिता । किन्तु कोपं निगृह्णती सा शान्तेन एव स्वरेण उक्तवती – ''भवान् रुचिविषये अतीव आसक्तः । तर्हि पाक-करणमपि भवान् जानाति इति मन्ये'' इति ।

''पाकं कर्तुम् अहं न जानामि, किन्तु रुचीनां विषये मम विशिष्टं ज्ञानम् अस्ति'' इति सगर्वम् उक्तवान् सारस्वतः ।

''एतां विहाय अन्याः काः विद्याः भवता अधीताः ?'' इति पृष्टवती शारदा ।

''विद्यायाः अध्ययनं मनुष्याः पूर्णोदरं भोजनं प्राप्तुमेव खलु कुर्वन्ति ? येन जनेन भोजनादिकं प्रतिदिनं न लभ्येत तेन विद्या अभ्यसनीया । मम तु तादृशी परिस्थितिः नास्ति'' इति उक्तवान् सारस्वतः ।

पत्युः विचारसरणिः कीदृशी इति शारदया ज्ञातम् । मातरम् एतं विषयं वदन्ती सा स्वस्य खेदं प्राकटयत् । तदा माता तां बोधितवती – ''पत्या यथा उत्तममार्गः आश्रीयेत तथा करणं भवत्या एव कर्तव्यम्'' इति ।

मातुः वचनं श्रुत्वा शारदा किमपि अनुक्त्वा पत्या सह श्वशुरगृहं गतवती ।

आगमनानुक्षणं शारदया ज्ञातं यत् पतिः केवलं भोजनप्रियः, कार्यं कर्तुं न सिद्धः इति । सा सारस्वतस्य पितामहीं पत्युः विषयम् उक्तवती ।

तदा पितामही – ''पुत्रि शारदे ! मया किं कर्तुं शक्यम् ? सः बाल्ये एव मातापितृविहीनः जातः । तस्य मातुलः कानिचन दिनानि विद्यां बोधितवान् । किन्तु वाणिज्यं कर्तुं सोऽपि विदेशं

गतः इति कारणात् अस्य प्रष्टा एव कोऽपि न आसीत् । अतः अयम् अलसः अभवत्'' इति वदन्ती स्वस्य असहायकतां प्रकटितवती ।

अथ कदाचित् भोजनसमये शारदा पतिम् उक्तवती - ''उद्योगं विना स्थीयते चेत् पर्वतसदृशी सम्पदपि नष्टा भविष्यति इति श्रूयते । एवमेव प्रतिदिनं व्ययः यदि क्रियेत तर्हि वयम् अचिरादेव निर्धनाः भवेम । अतः भवान् किमपि कार्यम् अवश्यं कुर्यात् । तेन भवतः समयस्य सदुपयोगोऽपि स्यात्'' इति ।

सारस्वतः भोजनानन्तरं पत्नीम् उक्तवान् - ''अहं किमपि कार्यं न जानामि । कः मह्यम् उद्योगं दद्यात् ? कोऽपि यदि उद्योगं दद्यात् तर्हि अवश्यम् अहं कार्यं किमपि कुर्याम्'' इति ।

पत्युः वचनं श्रुत्वा शारदा सन्तुष्टा - अयं कार्यं कर्तुं सिद्धः किल इति ।

स्वग्रामे जायमाने प्रातिवार्षिके श्रीराम-महोत्सवे भागं ग्रहीतुं शारदा ग्रामं गता । श्वशुरः जामातरम् अपि तस्मै महोत्सवाय निमन्त्रितवान् आसीत् । उत्सवस्य प्रमुखं दायित्वं नन्दिवरग्रामस्य भूस्वामिनः सत्य-नारायणस्य आसीत् ।

उत्सवे प्रतिवर्षम् अतीव रुचिकरं भोजनं भोजयति स्म सः । सारस्वतः यथापूर्वं पाके दोषाविष्कारं कृतवान् । 'पोलिकायां मधुरं न्यूनम् अस्ति । 'चित्रान्ने किञ्चित् हिङ्गु योजितं यदि स्यात् तर्हि तत् इतोऽपि रुचिकरं स्यात्' 'लड्डुखाद्ये भल्लातकमेव नास्ति' इत्यादयः सारस्वतस्य आक्षेपाः भूस्वामिनः कर्णपथम् अपि गताः । कुपितः सः - ''नन्दिवरस्य भूस्वामिनः आतिथ्यं सर्वत्र सुप्रसिद्धम् ।



एतावता केनापि मम आतिथ्ये दोषः न उक्तः । अद्य अयं कश्चित् तत्र दोषं दर्शयति । कियत् धैर्यम् एतस्य'' इति अवदत् ।

एतस्य श्रवणात् शारदायाः पिता भीतः अभवत् । सः झटिति भूस्वामिनः समीपं गत्वा - ''क्षम्यतां स्वामिन् ! यः एवम् उक्तवान् सः मम जामाता एव । सः पाके नलसदृशः । पाके वस्तूनां मिश्रणादिकं कथं, कियत्, करणीयम् इति सः यावत् जानाति तावत् अन्यः कोऽपि न जानाति । तस्य विद्या वनसुममिव व्यर्था जाता अस्ति । यदि भवता अवसरः कल्प्येत तर्हि सः पाके स्वनैपुण्यं प्रदर्शयितुं सिद्धः'' इति उक्तवान् ।

''सारस्वतः नाम, लक्ष्मीपतेः पौत्रः किम् ?'' इति पृष्टवान् भूस्वामी ।

''सत्यम् । सारस्वतः लक्ष्मीपतेः पौत्रः एव'' इति अवदत् शारदायाः पिता ।

''तर्हि समीचीनम् । अहं तं प्रधान-पाचकत्वेन नियोजयिष्यामि । सः पाकशास्त्रं कियत् जानाति इति मया अपि द्रष्टव्यम्'' इति उक्तवान् भूस्वामी ।

एतं विषयं श्रुतवतः सारस्वतस्य देहे कम्पनम् आरब्धम् । ''भवत्याः पित्रा कीदृशम् अकार्यं कृतम् ! अहं पाके दोषं द्रष्टुं समर्थः । किन्तु पाकं कर्तुम् अहं सर्वथा न जानामि । इतःपरम् अहं पाके दोषदर्शनम् अपि न करिष्यामि । अद्य रात्रौ एव ग्रामं प्रतिगच्छाव तावत्'' इति भीत्या उक्तवान् सारस्वतः ।

''भीतिः मास्तु भवतः । प्रधानपाचकेन पाकः करणीयः न भवति । तदाधीन्ये अनेके अनुभविनः पाचकाः भवन्ति एव ! तत् कार्यम् अङ्गीकृतं चेत् किं वस्तु कियता प्रमाणेन कथं योजनीयम् इत्यादिकं भवता वक्तव्यं भवेत् । पाकसम्बन्धिविषयं भवन्तं बोधयिष्यामि अहम्'' इति अवदत् शारदा ।

सारस्वतः परेद्यवि भूस्वामिनः गृहं गत-वान् । पत्न्याः वचनानि पालितवान् सः केषुचिदेव दिनेषु भूस्वामिनः प्रीतिपात्रम् अभवत् । उत्तमः पाचकः इति प्रशंसाम् अपि सः प्राप्तवान् । भूस्वामी तं 'रुचिराज'बिरुदेन सत्कृतवान् ।

पत्यौ जातेन परिवर्तनेन शारदा अतीव सन्तुष्टा । सारस्वतस्य श्वशुरौ पितामही च परमानन्दं प्राप्तवन्तः ।





# योग्यः समयः

विक्रमसेनः काश्मीरदेशस्य पालयिता । सः कदाचित् सभायां पण्डितैः सह शास्त्रविषयकचर्चायां मग्नः आसीत् । तस्मिन् समये दूरदेशात् कश्चन पण्डितः तत्र आगतः । राज्ञः अनुमतिं प्राप्य सः पण्डितः स्वेन विरचितम् एकं श्लोकं राजानं श्रावितवान् । तस्मिन् श्लोके समयस्य महत्त्वं उक्तम् आसीत् ।

''कार्यं कीदृशम् इति ज्ञात्वा कृतं कार्यं सर्वदा सफलं भविष्यति । अन्यथा कृतं कार्यं व्यर्थं भवेत्'' इति तस्य श्लोकस्य अर्थः ।

राजा पण्डितम् अमूल्येन बहुमानेन सत्कृतवान् । पण्डितस्य निर्गमनस्य अनन्तरं राजा सभासदः उद्दिश्य पृष्टवान् - ''फलदायकं कर्म कस्मिन् समये करणीयम् ?'' इति ।

तदा सभायां स्थितः कश्चन ज्योतिषिकः उक्तवान् - 'ग्रहाणां गतिं ज्ञात्वा तदनुगुणं तं समयं वक्तुं शक्नुमः वयम्'' इति ।

अपरः पण्डितः उक्तवान् - ''अनुभविनः वचनेन एतत् ज्ञातुं शक्यते'' इति ।

एवमेव सभायां स्थिताः पण्डिताः स्वीयं स्वीयम् अभिप्रायं निस्सङ्कोचं प्रकटितवन्तः ।

पण्डितैः दत्तेन उत्तरेण राजा न हृष्टः । अतः सः - ''अस्तु, अग्रे कदाचित् एतं विषयम् अधिकृत्य चर्चयिष्यामः'' इति उक्त्वा सभां विसृष्टवान् ।

कानिचन दिनानि अतीतानि । विक्रमसेनः कदाचित् मन्त्रिणा सह अरण्यं गतः । तत्र कश्चन आश्रमः तेन दृष्टः । आश्रमसमीपे कश्चन संन्यासी भूमौ गर्तं कुर्वन् तेन दृष्टः । राजा सन्यासिनः समीपं गत्वा तं विनयेन नमस्कृतवान् ।

''स्वामिन् ! भवान् तपस्वी ज्ञानी च । मम सन्देहान् दूरीकर्तुं भवान् एव समर्थः इति अहं भावयामि'' इति उक्तवान् राजा ।

संन्यासी शिरः उन्नमय्य क्षणं यावत् राजानं दृष्टवान् । ततः मन्दहासं कुर्वन् सः पुनः अपि

स्वकार्ये मग्नः अभवत् ।

तदा राजा सविनयं तं पुनः पृष्टवान् - ''फलदायके समये कार्यं करणीयम् इति वदन्ति पण्डिताः । कः समयः फलदायकः इति कथम् अस्माभिः ज्ञायेत ?'' इति ।

संन्यासी पुनः शिरः उन्नमय्य राजानं क्षणं यावत् दृष्ट्वा मृदु हसितवान् । विक्रमसेनः तस्य व्यवहारं दृष्ट्वा चिन्तितवान् यत् अद्य एतस्य संन्यासिनः मौनव्रतं स्यात् इति । अतः किमपि अवदन् सः राजभवनं प्रतिगतः ।

अनन्तरदिने महती वृष्टिः । अतः पुनरपि आश्रमं गन्तुम् इष्टवान् अपि राजा तत्र गन्तुं न शक्तवान् । ततः तृतीये दिने वृष्टिः स्थगिता जाता । वातावरणमपि मनसः आनन्दं जनयति स्म । तस्मिन् दिने राजा आश्रमं गतः ।

तदा संन्यासी आश्रमसमीपे समतलायां भूमौ सस्यानि आरोपयन् आसीत् ।

विक्रमसेनः तं भक्त्या नमस्कृत्य पृष्टवान् -''स्वामिन् ! कृपया भवान् अद्य वा मम प्रश्नस्य उत्तरं ददातु । मया परह्यः पृष्टम् आसीत् यत् कीदृशं कर्म कस्मिन् समये करणीयम् इति । तस्य उत्तरं न प्राप्तम् एव मया'' इति ।

संन्यासी यथापूर्वं कार्यं कुर्वन् एव शिरः उन्नमय्य राजानं पश्यन् - ''महाराज ! मया परह्यः एव भवतः प्रश्नस्य उत्तरं दत्तम् आसीत् । किन्तु भवता तत् न ज्ञातम् इति भाति'' इति उक्तवान् ।

''मया किमपि न अवगतम् । कृपया विस्तरेण उच्यते चेत् अहम् अनुगृहीतः भवेयम्'' इति उक्तवान् राजा ।

''सः समयः एष एव'' इति उक्त्वा सः संन्यासी पुनः कार्ये मग्नः अभवत् ।

संन्यासिनः वचनेन, व्यवहारेण च राज्ञः सन्देहः दूरं गतः। 'योग्यः समयः आगतः वा न वा इति चिन्तनं कदापि न करणीयम् एव । यत् कार्यं कर्तुम् इष्यते तत् अविलम्बेन आरब्धव्यम् । यथा संन्यासिना आरोपितस्य सस्यस्य वर्धने वृष्टिः सहकारिणी अभवत्, तथैव आरब्धस्य कार्यस्य सहकारी भविष्यति समयः अपि' इति राज्ञा अवगतम् ।

ततः संन्यासिनं विनयेन नमस्कृत्य राजा सन्तुष्टः सन् प्रतिनिवृत्तः ।





# भयङ्करः खातः

## १२

*[वेषेण क्षत्रिययुवकाः इव वयम् अपि दृष्टाः स्याम इति निश्चयं कृत्वा केशवः जयमल्लः च ब्रह्मदण्डिमान्त्रिकस्य गुहातः सुवर्णं चोरितवन्तौ । तस्मिन् एव समये ब्रह्मदण्डी चीत्कारं कुर्वन् प्रासादस्य प्रकोष्ठात् बहिः धावितवान् । धावन्तं तं रक्षकः गृहीत्वा अन्यान् रक्षकान् अपि आहूतवान् । तदनन्तरम् ..... ]*

रक्षकेण कण्ठे लक्ष्यीकृतस्य शूलस्य दर्शनेन तस्य चीत्कारस्य श्रवणेन च ब्रह्मदण्डिमान्त्रिकस्य तन्द्रा क्षणाभ्यन्तरे अपगता । तावति काले द्वित्राः रक्षकाः तत्र धावन्तः आगत्य तं परितः आयुधहस्ताः स्थितवन्तः ।

''पलायनं कर्तुम् उद्युक्तः अस्ति एषः दुष्टः । किं पश्यन्तः सन्ति भवन्तः ? शूलैः एतं क्षतगात्रं कुर्वन्तु'' इति वदन् तेषु कश्चन रक्षकः शूलम् उन्नीतवान् ।

ब्रह्मदण्डी क्षणं यावत् किमपि वक्तुम् अशक्तः अभवत् । ततः झटिति आत्मानं निगृह्य अवदत् सः - ''अयि भोः ! वीरसैनिकाः ! मा ताडयन्तु माम् । पलायनस्य प्रयासम् अहं कुर्वन् नास्मि'' इति ।

''भवदीयः एषः प्रयत्नः पलायनाय नास्ति किम् ? तर्हि भवतः एतस्य तात्पर्यं किम् ? अहम् असत्यवादी न इति भवतः वचनम् असत्यम् एव'' इति वदन् रक्षकः शूलस्य




पृष्ठभागेन ब्रह्मदण्डिनम् एकवारं प्रहृतवान् ।

रक्षकस्य प्रहारेण ब्रह्मदण्डी मान्त्रिकः अधः पतितवान् । कम्पमानः सः - ''भोः ! महाबलाः ! मा प्रहरन्तु माम् । निद्रामग्नः एव अहं यदा धावन् आसं तदा भवद्भिः गृहीतः अभवम् । वस्तुतः अत्र मम एव दोषः'' इति रुदन् उक्तवान् ।

ततः रक्षकाः तस्य हस्तपादबन्धनं कृत्वा, प्रकोष्ठे मञ्चस्य उपरि क्षिप्तवन्तः । मञ्चात् अधः पतित्वा ब्रह्मदण्डी लुठन् उत्थाय वस्त्राणि मार्जयन् उक्तवान् - ''रक्षक-बान्धवाः ! मां मा बाधन्ताम् । महता परिश्रमेण सम्पादितं धनराशिं चोरयित्वा धावनं कुर्वन्तौ विश्वासघातकौ मम शिष्यौ दृष्टौ मया स्वप्ने । अतः दिग्भ्रान्तः जातः आसम् अहम् । अतः एव तथा व्यवहृतं मया । मम कथने विश्वासं कुर्वन्तु भवन्तः'' इति ।

''इदानीम् अपि भवतः मतिः भ्रान्ता एव अस्ति'' - ब्रह्मदण्डिनः दिशि सन्देहेन दृष्टिं प्रसारयन् अवदत् कश्चन रक्षकः ।

''आदौ भवान् उक्तवान् यत् दुस्स्वप्नस्य दर्शनेन भीतः सन् धावन् आसम् इति । पुनः इदानीम् उच्यते - महाप्रयासेन सङ्गृहीतं धनं चोरयन्तौ शिष्यौ दृष्ट्वा धावन् अस्मि इति । परस्परं विरुद्धं वचनम् एतत् । अत्र किं सत्यम् ?'' इति पृष्टम् अपरेण रक्षकेण ।

''एषः पुनः पर्वतश्रेणिं प्रति गमनाय कमपि व्याजं कल्पयन् अस्ति । कुचिन्तनपथात् एषः बहिः आनेतव्यः चेत् अस्माभिः राजगुरवे वार्ता प्रेषणीया'' इति उक्तम् अन्येन रक्षकेण ।

राजगुरोः नामश्रवणमात्रेण एव कम्पमानः सन् ब्रह्मदण्डी उक्तवान् - ''भोः निपुण-योद्धारः ! मयि कृपां दर्शयन्तु । अस्मिन् अर्धरात्रे भवद्भिः राजगुरोः जागरणं कारितं चेत् न जाने, तस्य प्रतिफलरूपेण कीदृशी दुःस्थितिः सम्मुखीकरणीया भवेत् मया इति'' इति ।

रक्षकाः परस्परं मन्दं सम्भाषणं कृत्वा प्रकोष्ठस्य द्वारं कीलयित्वा बहिः आगत-वन्तः । ततः उभौ रक्षणाय तत्रैव स्थितवन्तौ । अपरः राजगुरोः निकटं गतः ।

रक्षकस्य वचनं श्रुत्वा राजगुरुः उक्तवान् - ''समीचीनं कृतम् । प्रातःकाले तं राज्ञः समक्षम् आनयन्तु । भवतां नायकं सूचयन्तु यत् केचन ब्रह्मदण्डिनः गुहां गत्वा तत्र किं प्रवृत्तम् इति ज्ञात्वा आगच्छेयुः इति मया राजगुरुणा आदिष्टम् अस्ति इति'' इति ।

सूर्योदयात् पूर्वम् एव चत्वारः सैनिकाः ब्रह्मदण्डिमान्त्रिकस्य गुहां प्रति गतवन्तः । गुहायाः पुरतः हस्तपादबन्धनं प्राप्तवद्भ्यां सैनिकाभ्यां रात्रौ प्रवृत्तं सर्वं यथावत् उक्तम् ।

गुहातः राजधानीं प्रति प्रत्यागतवन्तः ते सैनिकाः गुहायां प्रवृत्तं सर्वं राजानं न्यवेदयन् । तदवसरे राजगुरुः अपि तत्रैव आसीत् । राज्ञः राजगुरोः च पुरतः ब्रह्मदण्डी अञ्जलि-बद्धः सन् स्थितवान् आसीत् ।

सैनिकैः कथ्यमानं सश्रद्धं श्रुत्वा राजगुरुः उक्तवान् - ''सैनिकयोः हस्तपादबन्धनं कृत्वा धनं यत् चोरितं, तत् न लुण्ठाकानां कार्यम् । तत् तु केशवस्य जयमल्लस्य च कुतन्त्रम् अस्ति । परन्तु सः तृतीयः कः इति न ज्ञायते'' इति ।



''अत्र कः संशयः राजगुरुवर्य ! सः तृतीयः केशवस्य पिता वृद्धः । दुःस्वप्नस्य विषये मया उक्तम् आसीत् खलु ? तत्र सः वृद्धः न दृश्यते स्म । भवतु तावत् सा कथा, मम निधिः तु चोरितः अभवत् एव खलु'' इति वदन् उच्चैः रोदितुम् उद्युक्तः अभवत् ब्रह्मदण्डी ।

ब्रह्मदण्डिनि कृपां प्रदर्शयन् राजगुरुः अवदत् - ''शोकेन पीडितः मा भवतु भवान् ब्रह्मदण्डिन् ! भवतः निधिः प्रतिप्राप्स्यते एव । तत्र भवतः अपि कश्चन भागः भविष्यति । यस्य आवश्यकता अस्ति सः केशवः राज्यस्य सीमाः अतिक्रम्य बहिः न गतवान् इति तु इदानीं स्पष्टम् अभवत् । चलाम, तस्य ग्रहणाय प्रयत्नं करवाम । अनेन सह एतत् अपि सुस्पष्टं जातं यत् ते अपि भयङ्कर-खातदिशि एव गच्छन्तः सन्ति इति । मार्गव्ययं वोढुम् एव एतत् चौर्यं कृतं स्यात् तैः'' इति ।

ब्रह्मदण्डी क्रोधावेशेन नेत्राभ्याम् अग्निं वमन् उक्तवान् - ''महाराज ! राजगुरुमहाभाग ! इदानीं मम गमनम् अनुमन्यताम् । भवतां योजनानुसारं तौ विश्वासघातकौ केशव-जयमल्लौ कालभैरवाय उपहारीकृत्य तत्र लभ्यमानं धनराशिम् आनेष्यामि । आनीतं सर्वं राजकोशागारे योजयिष्यामि । मम राजभक्तौ विश्वासं कुर्वन्तु । इतःपरं मदीयं शेषजीवितं राज्यसेवार्थम् एव समर्पयिष्यामि । जयतात् कालभैरवः'' इति ।

राजगुरुः सङ्केतेन 'मौनेन स्थीयताम्' इति ब्रह्मदण्डिनं सूचितवान् । सर्वान् सैनिकान् ततः निर्गन्तुं सूचयित्वा सः राजानम् उद्दिश्य - ''महाराज ! ब्रह्मदण्डिनः, जितवर्मणः,



शक्तिवर्मणः च यात्रायै अद्य सायङ्कालीनः कश्चन मुहूर्तः निश्चितः अस्ति मया । कस्यापि संशयः न भवेत् इति उद्देशेन मया एवं कृतम् । अत्र पोषकरूपेण अस्माकं भटैः विविधानां मिथ्यावार्तानां प्रसारः सर्वत्र करिष्यते अपि'' इति वदन् राज्ञः कर्णयोः मन्दस्वरेण प्रसारयिष्यमाणायाः मिथ्यावार्तायाः स्वरूपं विवृतवान् ।

राजगुरुः यथा उक्तवान् आसीत् तथा सूर्योदयात् पूर्वम् एव जनश्रुतिः सर्वत्र प्रसरन्ती आसीत् । सा च एवम् आसीत् - 'राजगुरोः पादे व्रणः उत्पन्नः अस्ति । तस्य चिकित्सां कर्तुम् अशक्यम् अस्ति । अतः विन्ध्याचले लभ्यमानम् औषधम् आनेतुं ब्रह्मदण्डी मान्त्रिकः तत्र गच्छन् अस्ति' इति ।

महाधनराशिनिमित्तं ब्रह्मदण्डी भयङ्करखातस्य दिशि गच्छन् अस्ति इति सर्वे जनाः जानन्ति चेत् यान् देशान् अतिक्रम्य तेन गन्तव्यम् अस्ति तेषां राजानः तस्य मार्गे विघ्नान् उत्पादयेयुः इत्यतः एव राजगुरुणा एषा मिथ्या जनश्रुतिः उत्पादिता आसीत् । यदि कश्चन राजगुरोः प्राणरक्षणार्थम् औषधम् आनेतुं गच्छेत् तर्हि तस्य अवरोधं कोऽपि न करोति । प्रत्युत तदर्थं प्रस्थिततस्य जनस्य साहाय्यम् अपि कुर्यात् ।

राजगुरोः उपायः तु फलितः । दुष्टमान्त्रिकनाम्ना यः कुख्यातः आसीत् तस्य एव ब्रह्मदण्डिनः चित्रम् इदानीं जनानां मानसे जातम् आसीत् - महावैद्यः इति । जनाः परस्परं कथयन्ति स्म - ''सः ब्रह्मदण्डी महान् वैद्यशास्त्रज्ञः यदि न स्यात् तर्हि राजगुरुः चिकित्सायै तस्य नियुक्तिं किमर्थं वा अकरिष्यत् ?'' इति ।

तस्मिन् दिने सायं ब्रह्मदण्डिना सह गन्तुं जितवर्मणः शक्तिवर्मणः च नियोजनं कृतम् आसीत् । तयोः कार्यम् आसीत् यत् भयङ्करखाते कोऽपि निधिः यदि लब्धः स्यात् तर्हि तं ब्रह्मदण्डी स्वयम् एव स्वीकृत्य यथा न पलायेत तथा अवेक्षणम् इति । किन्तु यात्रायां केनापि 'भवन्तौ उभावपि कौ ?' इति पृष्टं चेत् ताभ्यां वक्तव्यम् आसीत् यत् आवाम् एतस्य अङ्गरक्षकौ इति ।

यः अपमानितः सन् दयनीयस्थितौ बध्वा आनीतः सः एव सम्मानितः सन् सगौरवं प्रेष्यमाणः आसीत् । एतस्मिन् प्रसङ्गे तत्र उपस्थितेषु केचन ब्रह्मदण्डिनः कण्ठे मालाः अर्पितवन्तः अपि ।

यदा अत्र ब्रह्मदण्डी ब्रह्मपुरनगरतः बहिः प्रस्थितवान् तदा तत्र वने विलीनाः केशवादयः अपि विन्ध्याचलदिशि प्रस्थानं कर्तुं सन्नाहम् आरब्धवन्तः आसन् । केशवस्य पिता यानि वस्त्राणि आनीतवान् आसीत् तानि धृत्वा तौ क्षत्रिकययुवकौ जातौ आस्ताम् ।

यदा तौ ततः गन्तुम् उद्युक्तौ तदा वृद्धेन सानुरोधम् उक्तं यत् भवद्भ्यां सह अहम् अपि आगमिष्यामि इति । एतत् अनङ्गीकुर्वन्तौ तौ – ''एतादृशे वार्द्धक्ये शतशः क्रोशानां क्रमणम् अपायकारकं भवितुम् अर्हति । अनेके अनूह्याः अपायाः अपि मार्गे भविष्यन्ति एव । तेषां सम्भावना ऊहितुम् अपि अशक्या'' इति तं बोधितवन्तौ । तथापि सः वृद्धः स्वस्य सङ्कल्पं परित्यक्तुं सिद्धः न अभवत् ।



''एतेन रूपेण भवान् यदि अस्माभिः सह आगच्छेत् तर्हि केनापि अभिज्ञायेत एव'' इति उक्तवान् केशवः ।

तदा वृद्धः – ''भवतोः कृते वस्त्राणि क्रेतुं यदा अहं नगरं गतवान् आसम्, तदा स्वस्य कृते अपि कानिचन वस्त्राणि क्रीतवान् अस्मि एव । प्रतीक्ष्यतां स्वल्पम् । वेषान्तरेण स्थितं मां भवन्तौ अपि अभिज्ञातुं न शक्नुतः प्रायः'' इति सोत्साहम् उक्त्वा गुल्मस्य पृष्ठतः गत्वा स्वल्पसमयानन्तरं प्रत्यागतवान् ।

तं वृद्धं दृष्ट्वा नितराम् आश्चर्यान्वितौ जातौ केशवः जयमल्लः च । कौशेयवस्त्रेण वेष्टितस्य तस्य कण्ठे रुद्राक्षहारः, हस्ते माला, कर्णयोः कुण्डले, ललाटे भस्म च विराजते स्म । इदानीं सः साक्षात् पण्डितः इव प्रतीयते स्म ।

''इदानीम् अहं भवतोः गुरुः अस्मि, राजकुमारौ भवन्तौ यात्रार्थं नयन् अस्मि इत्येव चिन्तनं भवेत् अस्माकं दर्शनेन जनानाम्'' इति उक्तवान् वृद्धः सन्तोषं प्रकटयन् ।

''एतत् तु समीचीनं गुरुवर्य ! किन्तु यात्रायां कस्मिंश्चित् नगरे कोऽपि पण्डितः सम्मुखीभूय प्रश्नं कमपि यदि पृच्छेत् तर्हि भवान् किं कुर्यात् ? भवति पाण्डित्यं तु नास्ति'' इति उक्तवान् जयमल्लः ।

''आवयोः गुरुः मौनानन्दनामा । मौनव्रती सः यात्रायां शिष्याभ्यां सह एव सम्भाषणं करोति, न तु अन्यैः सह इति वदतां भवन्तौ'' इति उक्तवान् वृद्धः ।

आत्मना सह पितुः नयनम् एव वरम् इति अचिन्तयत् केशवः । 'एतादृश्यां स्थितौ

पितरम् एकाकिनं कृत्वा गमनम् अयुक्तं स्यात् । एतावता कालेन ब्रह्मपुरराज्ये सर्वेऽपि ज्ञातवन्तः सन्ति यत् आवयोः पितापुत्रसम्बन्धः अस्ति इति । मम शिरसः मूल्यम् एकं सामन्त-राज्यम् । राज्यलालसया केनापि मम पिता अवलोकितः यदि स्यात् तर्हि सः मम वास-स्थानादिकं ज्ञातुम् इच्छन् तं बहुधा बाधेत अपि' इति चिन्तयन् पितुः मुखं पश्यन् प्रेम-मिश्रितेन स्वरेण - 'तात !' इति यावत् अवदत् तावता तस्य पिता तम् उक्तवान् - ''तात इति न, गुरुवर्य इति सम्बोध्यताम्'' इति ।

ततः केशवः पितुः हस्तं गृहीत्वा - ''गुरु-देव ! चलाम वयम् इदानीम् । अन्धकारस्य प्रसारात् पूर्वम् एव कञ्चन ग्रामं प्राप्नुयाम । रात्रौ तत्रैव शयित्वा प्रातःकाले अश्वक्रयणं कृत्वा अग्रे गच्छाम'' इति अवदत् ।

घण्टाद्वयं यावत् ते अरण्ये चलितवन्तः । यदा ते कञ्चित् ग्रामं प्राप्य वीथ्यां गच्छन्तः आसन्, तदा जनानां वार्तालापं श्रुत्वा ते भयग्रस्ताः आश्चर्ययुक्ताः च अभवन् ।

'ब्रह्मदण्डिमान्त्रिकः उभाभ्याम् अङ्ग-रक्षकाभ्यां सह विन्ध्याचलदिशि गच्छन् अस्ति । तत्र विन्ध्याचले विद्यमानेन औषधेन सः राजगुरोः व्रणं समीकरिष्यति । योग्यस्य औषधस्य अन्वेषणाय सः विन्ध्याचलं प्रति प्रस्थितः अस्ति' इति आसीत् जनानां सम्भाषणवस्तु ।

'अत्र कापि वञ्चना अस्ति इति भाति'' इति अवदत् जयमल्लः ।

ततः गृहस्य पुरतः उपविष्टान् जनान् ते पृष्टवन्तः - ''अत्र कुत्रापि भोजनं लभ्येत किम् ?'' इति ।

एतत् श्रुत्वा कश्चन वृद्धः उक्तवान् - ''समीपे कश्चन भोजनालयः तु अस्ति । किन्तु तत्र भोजनं लभ्येत इत्यत्र मम संशयः । यतः राज्ञः आदेशानुसारं तत्र महावैद्यः ब्रह्मदण्डी अङ्गरक्षकाभ्यां सह अद्य रात्रौ वासं करिष्यति'' इति ।

एतत् श्रुतवतां केशवादीनां त्रयाणाम् अपि हृदयं स्तब्धम् इव । तावता - ''देशभ्रमणार्थं प्रस्थितौ राजकुमारौ अमुके स्थले एव निवसेताम् इति नियमः तु कोऽपि नास्ति । अतः गच्छाम अग्रे'' इति उक्त्वा अग्रे प्रस्थितवान् वृद्धः । *- (अनुवर्तते)*



वेताल-
कथा

# खड्गस्य महिमा

क्रियमाणे कार्ये अल्पमपि अनुसन्धिम् अनङ्गीकृत्य पुनः अपि त्रिविक्रमः वृक्षम् उपसर्प्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापुर्वं श्मशानं प्रति पदानि अग्रे अस्थापयत् । तदा शवे विद्यमानः वेतालः अवदत् - ''अये राजन् ! भवान् धैर्यशाली इत्यत्र लेशमात्रेणापि संशयः नास्ति । भीतिम् अपि भाययति भवतः धीरता । लक्ष्यसाधनाय यत्किमपि पणीकर्तुं सिद्धः अस्ति भवान् । अद्य यावत् मया न अगवतं यत् भवतः अन्तिमं लक्ष्यं किं स्यात् इति । भवतः दर्शनेन शशिकान्तः नाम युवकः मम स्मृतिपथम् आयाति । सः लक्ष्यं साधयितुम् अनेकविधानि कष्टानि अनुभवन्



बहुधा परिश्रमं कृतवान् । मार्गायासपरिहाराय तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कनकवरनामके ग्रामे शशिकान्तः नाम कश्चन युवकः आसीत् । बह्वीषु विद्यासु पारङ्गतं तं खड्गविद्यायां पराजेतुं कोऽपि समर्थः न आसीत् । तस्य पिता प्रमुखः वाणिज्यकारः आसीत् । दौर्भाग्येण कदाचित् शशिकान्तस्य मातापितरौ नौकादुर्घटने मृतौ जातौ । पित्रा अर्जितेन धनेन शशिकान्तः अन्यवणिग्भिः सह वाणिज्यम् आरब्धवान् । किन्तु इतरे वणिजः अनुभवरहितं तं वञ्चयित्वा निर्धनं कृतवन्तः ।

एतादृश्यां स्थितौ जयानन्दः नाम तस्य सुहृत् तेन मेलितुं प्रतिवेशिग्रामतः आगतवान् । वाणिज्ये हानिप्राप्त्या खिन्नं शशिकान्तं सान्त्वयन् सः अवदत् - ''खड्गविद्यायां भवतः कौशलम् अपूर्वम् अस्ति । सा खड्गशक्तिः अस्मिन् एव ग्रामपरिधौ भवति चेत् उपयोगाय न भवेत् । इदानीं राजधान्यां करवीरपुरे नवरात्रोत्सवावसरे स्पर्धाः आयोजिताः सन्ति । तत्र भवान् भागं गृहीत्वा स्वसामर्थ्यं प्रदर्शयतु । अवश्यं भवान् राजास्थाने नियुक्तिं प्राप्स्यति । तेन भवतः भविष्यम् उज्ज्वलं भवेत्'' इति ।

मित्रस्य जयानन्दस्य कथनम् उचितम् अमन्यत शशिकान्तः । तदनन्तरदिने एव सः राजधानीं प्रति प्रस्थितवान् । मध्यमार्गे गहनारण्ये सः गच्छन् आसीत् । विश्रान्तिं स्वीकर्तुं कस्यचित् वृक्षस्य छायायाम् उपविशता तेन कुतश्चित् आगतः आर्तनादः श्रुतः । 'व्याघ्रः आगतः, रक्षतु मां व्याघ्रात्' इति कश्चित् चीत्कुर्वन् आसीत् ।

अनुक्षणं शशिकान्तः कोशतः खड्गं निस्सार्य यतः चीत्कारः श्रुतः तस्यां दिशि धावितवान् । तत्र मुनेः उपरि पतितुम् उद्युक्तः कश्चन व्याघ्रः तेन दृष्टः । शशिकान्तः खड्गेन व्याघ्रस्य उपरि आक्रमणं कृतवान् । तस्य खड्गप्रहारेण व्याघ्रः व्रणितः भूत्वा पतितवान्, तदीयः खड्गः अपि हस्तच्युतः सन् दूरे अपतत् च ।

तावता व्याघ्रः क्रुद्धः सन् उत्थितवान् । शशिकान्तः अपि झटिति उत्थाय व्याघ्रस्य उदरभागे पादेन प्रहृतवान् । दूरे पतित्वा पुनः आक्रमणं कर्तुम् उद्युक्तं तं व्याघ्रं सः पृष्ठ-भागस्य पादयोः गृहीत्वा दूरे क्षिप्तवान् । तेन व्याघ्रः निस्संज्ञः जातः ।

प्रवर्तमानं सर्वं कुतूहलेन पश्यन् आसीत् मुनिः । सः शशिकान्तम् उद्दिश्य - ''वीर-युवक ! भवान् महासाहसी अस्ति निश्चयेन । भवादृशाः निस्स्वार्थयोद्धारः विरलाः एव । स्वप्राणान् पणीकृत्य मां रक्षितवान् भवान् । इतः अहं हिमालयं गमिष्यामि । स्वीकरोतु एतं खड्गं महिमयुक्तम् । किन्तु एतस्य उपयोगेन दुस्साहसाय न यतनीयम् । भवति यावत् धैर्य-साहसादिकं पूर्णतया भवति, यदा खड्गचालन-कौशलं नैपुण्यं चापि भवति, तावत् एव एषः खड्गः भवतः साहाय्यं करिष्यति'' इति उक्त्वा तस्मै अपूर्वं खड्गं समर्पितवान् ।

शशिकान्तः तं मुनिं भक्त्या प्रणम्य यात्राम् अनुवर्तितवान् । तेन यावत् राजधानी प्राप्ता तावता अन्धकारः प्रसृतः आसीत् । धर्म-शालायां सः वासं कृतवान् ।

तदनन्तरदिने एव नवरात्रोत्सवस्पर्धाः आरब्धाः अभवन् । राज्ञः बन्धुः चक्रधरः नाम कश्चन तरुणः सर्वान् पराजित्य विजयी जातः आसीत् स्पर्धायाम् । तस्य जयेन राजा नितरां सन्तुष्टः आसीत् । सः तस्मै 'खड्गवीरः' इति उपाधिं दातुम् उद्युक्तः आसीत् । तावता शशिकान्तः तत्र प्रविशन् - ''क्षमां प्रार्थये महाराज ! मम आगमने विलम्बः जातः'' इति वदन् खड्गं निष्कासितवान् कोषात् ।

एतत् दृष्ट्वा नितरां क्रुद्धः चक्रधरः - ''कः एषः ? दशनिन ग्रामीणः इव प्रतीयते । खड्गयुद्धे मम सम्मुखीकरणस्य साहसम् ! एषः मां यदि पराजेतुं शक्नुयात् तर्हि अहं राज्यं परित्यज्य निर्गच्छेयम्'' इति वदन् खड्गं गृहीत्वा युद्धाय सिद्धः अभवत् ।



उपस्थिताः सर्वेऽपि नेत्रे विशालीकृत्य किम् अग्रे भवेत् इति कौतुकेन पश्यन्तः आसन् । राजपार्श्वे उपविष्टा राजकुमारी मणिकर्णिका मन्दहासं कुर्वती आसीत् ।

खड्गयुद्धम् आरब्धम् । शशिकान्तः सरल-तया चक्रधरं सम्मुखीकृत्य कतिपयेषु एव क्षणेषु तं पराजितवान् ।

कस्यापि कल्पना एव न आसीत् यत् चक्रधरः एवं पराजितः भवेत् इति । दर्शकाः, राजा, राजकुमारी च आश्चर्येण स्तब्धाः अभवन् ।

चक्रधरम् असामान्यं खड्गनिपुणं मन्यन्ते स्म सर्वे । तादृशस्य पराजयः एव सर्वेषाम् आश्चर्यस्य कारणम् आसीत् । तथापि सर्वे करताडनेन शशिकान्तम् अभिनन्दितवन्तः ।

अनुक्षणं राजा 'खड्गवीरः' इति उपाधिं



शशिकान्ताय प्रदाय – ''भवान् सायम् उद्याने मिलतु'' इति तं निमन्त्रितवान् ।

राजा, युवराज्ञी मणिकर्णिका, प्रधानमन्त्री, आस्थानपण्डितः च यदा राजभवनं प्राप्तवन्तः तदा राजा तान् उक्तवान् – ''अद्य यः विजयं प्राप्तवान् सः वीरः बहुसुन्दरः सुशीलः च प्रतीयते आपाततः दर्शनात् । 'ग्रामतः आगतवान् अस्मि' इति वदति सः । किन्तु मम तु भासते यत् सः सुशिक्षितः एव स्यात् इति'' इति ।

तदा मन्त्रिणा उक्तम् – ''महाराज ! एषः युवकः धर्मशालायां वसन् अस्ति । अस्माकं गुप्तचराणां द्वारा तस्य समग्रं विवरणं प्राप्तम् अस्ति मया । शशिकान्तः सम्पन्ने परिवारे एव जातः । किन्तु परिस्थितीनां कारणतः सः निर्गतिकः जातः । स्वखड्गनैपुण्यं प्रदर्श्य आस्थाने उद्योगः प्राप्तव्यः इति उद्देशेन एव तेन अत्र आगतम् अस्ति । सः अनेकासु विद्यासु कृतपरिश्रमः अस्ति'' इति ।

युवराज्ञी एतत् सर्वम् अवधानपूर्वकं श्रुत्वा मृदु हसित्वा मन्त्रिणं दृष्टवती ।

स्पर्धानाम् आरम्भात् पूर्वम् एव राज्ञा घोषितम् आसीत् यत् स्पर्धायां जयं प्राप्तवते राजकुमारीं दत्त्वा विवाहं कारयिष्यामि इति । राज्ञः सम्पूर्णः विश्वासः आसीत् यत् चक्रधरः एव विजयी भविष्यति इति । किन्तु तस्य कल्पना नासीत् – एवं भविष्यति इति ।

सायङ्काले यदा राजा, युवराज्ञी, मन्त्री, शशिकान्तः च उद्याने उपस्थिताः आसन् तदा कश्चित् गुप्तचरः तत्र आगत्य अवदत् – ''महाराज ! चक्रधरः इदानीं राज्यस्य सीमाप्रदेशे भवन्तं विरुद्ध्य विद्रोहम् आचरितुं जनानां सङ्ग्रहं कुर्वन् अस्ति । 'मान्त्रिकेण शशिकान्ताय दत्तस्य महिमयुक्तस्य खड्गस्य कारणेन एव अहं पराजयं प्राप्तवान् । युवराज्ञ्याः मणिकर्णिकायाः पाणिं ग्रहीतुं सः शशिकान्तः योग्यः नास्ति । अतः युद्धेन राजानं पराजित्य अहं मणिकर्णिकां प्राप्स्यामि' इति तस्य कथनम् अस्ति'' इति ।

एतत् ज्ञात्वा राजा आश्चर्यचकितः भूत्वा उक्तवान् – ''अहो ! मम बन्धुः एव कुतन्त्रेण मां पराजेतुं सङ्कल्पं कृतवान् इति तु महते आश्चर्याय !'' इति ।

तदा आस्थानपण्डितः हसन् अवदत् – ''महाराज ! भवान् निश्चिन्तः भवतु एतद्विषये । सः दुष्प्रचारं यत् कुर्वन् अस्ति तत् अस्माकं हिताय एव । ततः हानिः कापि न भविष्यति

अस्माकम् । महिमान्वितस्य तस्य खड्गस्य विषयं प्रतिवेशिनः राजानः यदि जानीयुः तर्हि स्वप्ने अपि अस्मद्राज्यस्य वशीकरणचिन्तनं न कुर्युः'' इति ।

तदनन्तरं सः शशिकान्तस्य, राजकुमार्याः च दिशि पश्यन् - 'मया उक्तम् अवगतं खलु ?' इति उक्तवान् ।

तौ सन्तोषेण स्वस्य अङ्गीकारं सूचितवन्तौ शिरश्चालनपूर्वकम् ।

वेतालः एवं कथां श्रावयित्वा अवदत् - ''आस्थानपण्डितेन यत् उक्तं तत्र युक्तिः वाक्चातुर्यमात्रं च दृश्यते । वास्तविकता कापि न प्रतीयते । एवं ननु ? चक्रधरः कथं ज्ञातवान् - शशिकान्तस्य खड्गः महिमयुक्तः इति ? यदि चक्रधरः आक्रमणं कुर्यात् तर्हि देशस्य हानिः किं न भवेत् ? तथापि एतस्मात् देशस्य लाभः एव इति किमर्थम् उक्तं पण्डितेन ? मम एतेषां प्रश्नानां समीचीनम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवदीयं शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''आस्थानपण्डितस्य वचनेषु वास्तविकता एव अधिकतया अस्ति । यद्यपि चक्रधरेण घोषणा कृता आसीत् - पराजितः भवामि चेत् राज्यात् बहिर्गच्छामि इति, तथापि सः पराजयं सोढुं न शक्तवान् । अतः सः प्रचारं कृतवान् 'शशिकान्तस्य विजयस्य कारणं वीरता न, अपि तु महिमयुक्तः खड्गः एव' इति । एतत् वास्तविकवीरस्य लक्षणं न । अन्यच्च राजानं विरुद्ध्य विद्रोहचिन्तनं कुर्वन् सः जनान् सङ्घटयन् यत् अस्ति ततः तस्य कुटिलबुद्धित्वं स्पष्टं भवति । आस्थानपण्डितेन सुष्ठु एव उक्तम् आसीत् - चक्रधरस्य तथाविधप्रचारेण हानिः न भविष्यति, प्रत्युत लाभः एव इति । मुनिना स्पष्टम् उक्तम् आसीत् - धैर्यसाहस-युक्तता यावत् भवति तावत् एषः खड्गः साहाय्यं करिष्यति एव इति । अतः शशिकान्तः कठोरेण परिश्रमेण अपेक्षितसामर्थ्यं सम्पादितवान् । अतः तस्य पराजयस्य प्रसक्तिः एव न उद्भविष्यति । राज्यस्य कापि विपद् न आपतिष्यति अपि'' इति ।

एवं राज्ञः मौनभङ्गं कर्तुं समर्थः वेतालः शवसहिततया अदृश्यतां प्राप्य पुनः यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# वयनाडुस्थानि जैनमन्दिराणि



वायनाडजनपदः पर्वतीयः । सः केरलराज्ये क्यालिकट्-कण्णूरजनपदयोः सीमां, तमिलनाडुराज्यस्य नीलगिरिप्रदेशं च स्पृशति । अस्मिन् प्रदेशे बहूनि जैनमन्दिराणि सन्ति । तेषु च अनेकानि शिथिलप्रायाणि ।

किन्तु अपवादरूपेण तिष्ठति अत्रत्यं सुल्तानागारम् । एतत् भारतीयपुरातत्त्वविभागेन आ कतिपयेभ्यः वर्षेभ्यः संरक्ष्यमाणम् अस्ति । द्वादश-चतुर्दश-शताब्दयोः मध्यभागे एतत् निर्मितं स्यात् इति ऊह्यते । पुनर्नवीकरणस्य अनन्तरम् इदानीं पर्यटकानां, पुरातत्त्व ज्ञानां च दर्शनार्थम् एतत् सिद्धम् अस्ति ।

एतत् मन्दिरं दक्षिणभारते अवशिष्टेषु जैनधर्मप्रतीकेषु अन्यतमम् इति परिगण्यते ।

मैसूरनायकः टिप्पुसुल्तानः स्वराज्यस्य विस्तारणावसरे अस्मिन् स्थाने सैनिकाश्रयं कृतवान् आसीदिति ज्ञायते ऐतिहासिकोल्लेखानां द्वारा । सुल्तानशस्त्रागारम् इति प्रसिद्धस्य अस्य स्थानस्य वास्तविकं नाम 'गणपतिवोट्टम्' इति ।

एषु दिनेषु एतस्य मन्दिरस्य परिसरे विद्यमानस्य कूपस्य नवीकरणं यदा कृतं तदा मूर्तिद्वयं प्राप्तम् । एका श्वेतशिलया निर्मिता महावीरजैनस्य मूर्तिः, अपरा तु कृष्णशिलया उत्कीर्णा मस्तिष्कमात्ररूपा ।

## किं भवन्तः जानन्ति ?

चित्रोष्ट्रः (जिराफे) उन्नततमः । सः १८ पदमितम् औन्नत्यम् आप्तुम् अर्हति । २१ अङ्गुलदीर्घा रसना कर्णशुद्धतायै हस्तवत् उपयुज्यते तेन । निर्यासगुणयुक्तया रसनया सः वृक्षशाखाः आक्रष्टुं, पर्णानि अवचेतुं च शक्नोति लीलया ।



# भाग्यप्राप्तिः

वीरभद्रः दयाहृदयः राजा । धनदानाय ये अर्हाः तेभ्यः दानकरणे तस्य सङ्कोचः न आसीत् । ऐदम्प्राथम्येन वाणिज्यम् आरब्धुकामाः, परिवारं तीर्थाटनाय नेतुम् इच्छुकाः, दीर्घकालतः व्याधिना बाध्यमानाः, इत्यादयः सर्वविधाः अपि जनाः राजतः धन-साहाय्यं प्राप्नुवन्ति स्म एव ।

आरब्धं वाणिज्यं लाभदायकतया प्रगति-पथे अस्ति, तीर्थयात्रां निर्विघ्नतया निर्वर्त्य वयम् आगताः, दीर्घकालीनात् व्याधितः इदानीं मुक्तता प्राप्ता इत्यादीः सन्तोषदायिकाः वार्ताः वक्तुं राजनिकटं बहवः आगच्छन्ति स्म । एतासां श्रवणात् राजा हर्षं प्राप्नोति स्म ।

एवं स्थिते अपि काचित् पीडा तं बाधते स्म । वीरमूर्तिः नाम कश्चन तस्य दूरबन्धुः निर्धनः आसीत् । वस्तुतः राजा तस्य साहाय्यं कर्तुम् इच्छति, किन्तु साहाय्यप्राप्तौ वीरमूर्तिः एव असमर्थः भवति स्म ।

वीरमूर्तिः मृगयाप्रवीणः आसीत् । विभिन्न-विषयककवितानां सङ्ग्रहं कृत्वा काव्यप्रियं राजानं सः श्रावयति स्म अपि । यदा सः मृगयां समाप्य आगच्छति, अथवा नूतनं पद्यं किमपि श्रावयति तदा तं पुरस्कारदानपुरस्सरं सम्मानयति स्म राजा । किन्तु प्राप्तस्य धनस्य उपयोगे वीरमूर्तिः सर्वथा असफलः एव भवति स्म । कदाचित् चौर्येण तत् धनं नष्टं भवति स्म । पुनः कदाचित् कुत्रचित् विस्मृत्य त्यक्तं वा भवति स्म । अतः सः दारिद्र्यात् मुक्तः न जातः एव । सर्वदा अपि राजसभायां सः जीर्णवस्त्रः मलिनवस्त्रः बुभुक्षितः च एव राज्ञा अवलोक्यते एव ।

कदाचित् वीरमूर्तिः मृगयां कृत्वा तस्य कौशलप्रतीकभूतान् प्राणिनां मृतदेहान् आनीतवान् राजसमीपम् । तेन सन्तुष्टः राजा





चिन्तितवान् यत् सभासदां समक्षे एतस्य सम्माननं करणीयम् इति । अतः सः सर्वेषां समक्षे वीरमूर्तेः परिचयं वदन् – ''एषः भ्रातृ-सम्बन्धी दूरबन्धुः । अद्य एतेन मृगयायां बहुविधानां पशूनां हननं कृतं, स्वस्य कौशलं च प्रदर्शितम् । अतः भवतां पुरतः अहम् एतस्य सम्माननं करोमि'' इति उक्त्वा प्रकाश-युक्तं नारङ्गं तस्य हस्ते दत्तवान् । वीरमूर्तिः सर्वान् प्रणम्य ततः निर्गतवान् ।

राजा निर्धनबन्धुना सह क्रीडन् अस्ति पुरस्कारदानव्याजेन इति सभासदः परस्परम् अवदन् । राजा एतत् श्रुतवान् चेदपि अश्रुतवान् इव व्यवहरन् ततः निर्गतवान् । राज्ञा दत्ते तस्मिन् नारङ्गफले अमूल्यानि रत्नानि सन्ति इति न सभासद्भिः ज्ञातं, न वा वीरमूर्तिना ।

वीरमूर्तिः तत् फलं सुष्ठु न लक्षितवान् एव । 'सर्वेषां सम्मुखे मम श्लाघनमात्रं कृतं राज्ञा । एतत् तु सामान्यात् नारङ्गफलात् भिन्नम् अस्ति, तावदेव' इति चिन्तयन् सः तत् स्यूते स्थापयित्वा गृहं प्रति प्रस्थितवान् ।

मार्गे कश्चन साधुः भिक्षापात्रं तस्य पुरतः प्रासारयत् । तस्मै दातुं वीरमूर्तेः निकटे किमपि न आसीत् फलात् ऋते । अतः सः तत् फलं पात्रे स्थापयित्वा – ''बुभुक्षितः भवान् एतत् फलं वा खादतु'' इति उक्त्वा अग्रे गतवान् ।

भारयुक्तं नारङ्गं प्राप्य आश्चर्यचकितः साधुः – 'प्रकाशमानम् एतत् फलं राज्ञे समर्पयामि चेदेव वरं भवेत्' इति चिन्तयित्वा राजप्रासादं गतवान् । द्वारपालकाः तम् अन्तः अनयन् ।

राजसभां प्रविष्टं तं राजा आदरेण स्वागती-कृत्य 'उपविश्यताम्' इति उक्तवान् । साधुः आत्मना प्राप्तं नारङ्गफलं स्वपात्रतः निष्कास्य राज्ञे यच्छन् – ''महाराज ! निर्धनस्य मम अल्पः उपहारः एषः । कृपया एतत् स्वी-क्रियताम् । भगवान् भवन्तं दीर्घेण आयुषा अनुगृह्णातु'' इति उक्तवान् ।

तत् फलं दृष्ट्वा राजा ज्ञातवान् – 'वीरमूर्तेः भाग्यं नास्ति । एतस्य मूल्यज्ञाने असफलः जातः सः' इति । फलं यत् दत्तं तस्य प्रतिफल-रूपेण राजा तस्मै साधुजनाय रजतनाणकानि दत्तवान् । साधुः धन्यवादं समर्प्य ततः निर्गत-वान् ।

कदाचित् राज्ञा एव मृगया आयोजिता । वीरमूर्तिः अपि मृगयासमूहं प्रविश्य अधिकं शौर्यं प्रदर्शितवान् । एतस्मात् सन्तुष्टः राजा

पुनः अपि तदेव फलं तस्मै दत्तवान् ।

वीरमूर्तिना चिन्तितं - 'पूर्वं यत् दत्तं तादृशम् एव स्यात् एतत्' इति । अतः सहजतया सः तत् स्यूते पूरयित्वा सभातः बहिर्गतवान् ।

बहिः द्वारसमीपे कश्चित् ताम्बूलचर्वणं कुर्वाणः तेन दृष्टः । 'अन्यत् ताम्बूलम् अस्ति चेत् ददातु कृपया' इति अवदत् वीरमूर्तिः । सः जनः वीरमूर्तये ताम्बूलम् अयच्छत् । तत् स्वीकृत्य प्रतिफलरूपेण तत् विशिष्टं फलं तस्मै समर्प्य अग्रे गतवान् वीरमूर्तिः ।

फलं यच्छतः वीरमूर्तेः मौढ्यं जानन् उच्चैः हसितुम् उद्युक्तः सः सभासत् कथञ्चित् हासम् अवरुद्ध्य फलं स्वीकृतवान् ।

तत् सः राज्ञः समीपं गत्वा तस्मै तत् फलं प्रत्यर्प्य तस्य प्राप्तिक्रमं विशदीकृत्य उक्तवान् - ''महाराज ! भवतः बन्धुः महामूर्खः एव । द्विवारं भवान् तस्मै एतत् फलं दत्तवान् । तथापि सः इतः प्रयोजनं न प्राप्तवान् । तादृशं जनं धनिकं कर्तुम् उद्युक्तस्य भवतः प्रयत्नः व्यर्थः एव'' इति ।

पुनः वीरमूर्तेः मृगयाकौशलेन आकृष्टः राजा तृतीयवारम् अपि तस्मै तदेव फलं दत्त-वान् । 'एषः एव अन्तिमः अवसरः । एतस्मै पुनः किमपि न दास्यामि' इति निर्णीतं तेन ।

स्वीकारसमये तत् फलं वीरमूर्तेः हस्तात् च्युतं सत् अधः अपतत् ।

भीतः वीरमूर्तिः सम्भ्रमेण - ''क्षन्तव्यः अहं महाराज ! अनवधानात् एवं सञ्जातम्'' इति उक्त्वा पतितं फलं स्वीकर्तुम् अवनमनं कृतवान् । अहो आश्चर्यम् !! खण्डशः भग्नात् तस्मात् फलात् अमूल्यानि वज्राणि मणयः च इतस्ततः विकीर्णानि आसन् तत्र !!!

महत् आश्चर्यम् अनुभवन् सः वीरमूर्तिः एकैकम् अपि सङ्ग्रहीतुम् उद्युक्तः अभवत् ।

तदा तम् उद्दिश्य अवदत् राजा - ''भोः, अद्य भवदीयस्य भाग्यस्य द्वारम् उद्घाटितं जातम् । बहुवारं भवतः साहाय्याय मया प्रयासः कृतः । तथापि भवान् एव तस्य स्वीकारे मतिं न करोति स्म । मया दत्तम् अन्येभ्यः समर्पयति स्म भवान्'' इति ।

आजीवनं सुखेन स्थातुं यावत् आवश्यकं तावत् सुवर्णादिकं तस्मै दत्त्वा प्रेषितवान् राजा । तस्मात् वीरमूर्तिः महान् धनिकः अभवत् । किन्तु सः कृपणतां न अवलम्बितवान् । दीनानां साहाय्यकरणे राज्ञा सह एव स्पर्धते स्म सः ।





# वाणिज्यकौशलम्

धर्मकटकं किञ्चन लघुराज्यम् । तस्य पालकः धर्मराजः प्रजाः अपत्यानि इव मन्यते स्म । प्रतिवेशिराजैः सह अपि तस्य सम्बन्धः उत्तमः आसीत् । किन्तु तस्य बल-हीनता नाम मन्त्रिषु, कर्मचारिषु च अति-विश्वासः । तेन कारणेन कदाचित् कष्टम् अनुभवति स्म सः ।

धर्मकटकराज्ये विविधानि करकौशल-वस्तूनि निर्मीयन्ते स्म । तत्रत्यानि रत्नकम्बलानि कौशेयशाटिकाः च नितरां प्रसिद्धानि आसन् । तानि देशे सर्वत्र विदेशेषु च विक्रीतानि भवन्ति स्म ।

कदाचित् राजा धर्मराजः राज्ञ्या सह रथे उपविश्य नगरे भ्रमणार्थं प्रस्थितवान् । नगर-वासिभिः तयोः अभिवादनं कृतम् । नगरस्य वीथीषु रत्नपतिनामकस्य वणिजः आपणे विद्यमानेषु रत्नकम्बलेषु कौशेयशाटिकासु च लग्ना अभवत् राज्ञ्याः दृष्टिः ।

अन्तःपुरं प्रविश्य राज्ञी राजानं निवेदितवती – ''रत्नपतेः आपणतः कानिचन रत्न-कम्बलानि, कौशेयशाटिकाः च आनाययतु'' इति ।

राजा मन्त्रिणम् आहूय राज्ञ्याः इच्छां विवृत्य – ''कञ्चित् जनं प्रेषयित्वा तानि आनाययतु, तेषां मूल्यम् अपि ददातु'' इति आदिशत् ।

''महाराज ! अविलम्बेन एव एतदर्थं व्यवस्था भविष्यति'' इति उक्त्वा मन्त्री कोषाधिकारिणम् आहूय तत् दायित्वं तस्मै प्रदत्तवान् ।

कोषाधिकारी अनुक्षणमेव वाणिज्याधि-कारिणम् आनाय्य तत् कार्यं सूचितवान् । सः करग्रहणाधिकारिणे तत् कार्यं समर्पित-वान् ।

सैनिकाः रत्नपतेः आपणं गत्वा एतां वार्तां यदा श्रावितवन्तः तदा रत्नपतिः – ''राज्ञा आदिश्यते चेत् समग्रम् आपणम् एव न दद्यां किम् ?'' इति वदन् पञ्चविंशतिं कम्बलानि,

पञ्चविंशतिं शाटिकाः च बद्ध्वा तेभ्यः समर्पितवान् । तेन सह सैनिकानां पत्नीभ्यः अपि शाटिकाः दत्तवान् सः ।

"अस्माकं पत्नीनां कृते तु शाटिकाः दत्ताः भवता । उन्नताधिकारिणां कृते किं दीयेत ?" इति पृष्टं सैनिकैः ।

अनन्यगतिकः रत्नपतिः वाणिज्याधिकारिणः पत्न्यै करग्राहकाधिकारिणः पत्न्यै च कम्बलानि शाटिकाः च दत्तवान् ।

रत्नपतिः रात्रौ निद्रां न प्राप्तवान् । यतः एकैकस्य कम्बलस्य मूल्यं लक्षाधिकरूप्यकमितम् आसीत् ।

राजभवनतः धनम् आगच्छेत् इति कतिचन दिनानि यावत् सः प्रतीक्षां कृतवान् । तस्य प्रतीक्षा व्यर्था अभवत् । एतस्मिन् विषये सैनिकान् अधिकारिणः वा सूचयामि चेत् प्रयोजनं न भविष्यति इति मत्वा कोषाधिकारिणे सः प्रार्थनापत्रमेकं प्रेषितवान् - मूल्यानां विवरणम् उल्लिख्य ।

कोषाधिकारी तत् प्रार्थनापत्रं वाणिज्याधिकारिणे दत्तवान् । सः कराधिकारिणम् आकार्य यथेच्छं तर्जितवान् ।

रत्नपतेः आशा आसीत् यत् मया प्राप्तव्यं धनं दिनाभ्यन्तरे प्राप्येत इति । किन्तु तथा न अभवत् ।

वाणिज्याधिकारिणः तर्जनात् मम अपमानः अभवत् इति चिन्तयन् कराधिकारी नितरां क्रुद्धः । अतः वाणिज्याधिकारिणः गुप्तचराः रत्नपतेः आपणम् आगत्य सर्वत्र अन्विष्य निर्णयं कृतवन्तः यत् एषः करं न दत्तवान् इति । तैः एतत् अपि निर्णीतं यत्



एतस्य समीपे महती सम्पत्तिः अस्ति, सम्पत्तेः कापि गणना एव नास्ति इति । ततः ते रत्नपतिं बद्ध्वा कारागारे निक्षिप्तवन्तः ।

एतेन रत्नपतेः पत्नी पुत्राः च सङ्कटे पतितवन्तः । अग्रे किं कर्तव्यम् इति अज्ञात्वा दौर्भाग्यं धिक्कुर्वन्तः ते रोदनं कृतवन्तः ।

तस्मिन् एव दिने काशीयात्रां समाप्य रत्नपतेः पिता वज्रपतिः गृहम् आगतवान् । सः प्रवृत्तं सर्वं ज्ञातवान् । कोषाधिकारिणः श्वशुरः तस्य बाल्यमित्रम् आसीत् । अतः तेन सह कोषाधिकारिणः समीपं गत्वा पुत्रस्य परतया सः क्षमां प्रार्थितवान् । "मम पुत्रस्य निकटे या सम्पत्तिः अस्ति सा तु पारम्परिकतया प्राप्ता । मम पुत्रः यथानियमं करं समर्पयन् अस्ति एव' इति निवेद्य करदानस्य आधारं च दर्शयित्वा महता प्रयासेन पुत्रं कारागारतः



मुक्तं कृतवान् वज्रपतिः ।

एतस्मिन् कार्ये मासः अतीतः अभवत् । तावता रत्नपतेः वाणिज्यं विनष्टं जातम् आसीत् । मम विषये महत् अन्याय्यं जातम् इति चिन्तयन् रत्नपतिः बहुधा खिन्नः अभवत् । चिन्ताग्निना दग्धः सः कदाचित् पितरम् उक्तवान् - ''प्रवृत्तम् अन्याय्यम् अहं साक्षात् राजानम् एव वदिष्यामि'' इति ।

एतत् श्रुत्वा पिता दीर्घं निश्श्वस्य उक्तवान् - ''भवान् वणिजः पुत्रः अस्ति । बहुकालतः वाणिज्यं कुर्वन् अस्ति अपि । किन्तु प्रापञ्चिकं ज्ञानं न प्राप्तं भवता । तादृशं ज्ञानं भवतः नास्ति इति कारणेन एव एतादृशं कष्टम् आपतितम् । सरलतया परिहर्तुं योग्यां समस्यां भवान् स्वयं जटिलां कृतवान् । राज्ञ्याः कृते भवता रत्नकम्बलानि, शाटिकाः च प्रेषिताः । तेषां धनं प्राप्तुं कोषाधिकारिणे प्रार्थनापत्रं न प्रेषणीयम् आसीत् । तेन धनम् अपि नष्टं, गौरवम् अपि अपगतम्'' इति ।

''तानि लक्षशः रूप्यकाणि अहं कथं त्यजेयम् ? तावत् धनं कः दद्यात् मह्यम् ?'' इति क्रोधाविष्टः रत्नपतिः अपृच्छत् ।

''लक्षशः न, कोटिशः रूप्यकाणाम् अर्जनं कर्तुम् अपि अवसरः प्राप्तः अभविष्यत् भवता । राज्ञः विश्वासः यदि प्राप्येत तर्हि महालाभस्य सम्भावना अभविष्यत्'' इति उक्तवान् पिता ।

''अस्माभिः प्राप्तव्यस्य धनस्य याचना न करणीया इति वा भवतः कथनस्य अर्थः ? अत्र कः अपराधः मम ?'' इति क्रोधमिश्रितेन एव स्वरेण अपृच्छत् रत्नपतिः ।

''धनप्रार्थना अपराधाय न । किन्तु भवतः

प्रार्थनापद्धतौ व्यावहारिकज्ञानस्य अभावः दृश्यते । अतः एव सर्वविधा हानिः अनुभूता भवता'' इति उक्तवान् वज्रपतिः ।

''भवता किम् उच्यते इति मया न ज्ञातम्'' इति उक्तवान् रत्नपतिः ।

''राजा समीचीनः अस्ति । किन्तु तं परितः विद्यमानाः सर्वे अपि उत्तमाः भवन्ति एव इति न । वाणिज्यस्य तन्त्राणि ज्ञातव्यानि, व्यावहारिकं कौशलं च आश्रयणीयम् । वास्तविकता व्यावहारकौशलं च वाणिज्यस्य प्रमुखं मुखद्वयम् । उभयोः मध्ये आकाश-भूमिभेदः अस्ति । एतस्मिन् विषये इतोऽपि भवतः अनुभवः पक्वः न जातः'' उक्तवान् वज्रपतिः ।

''मया किं करणीयम् आसीत् इति स्पष्टं वदतु । किम् एतेन द्राविडप्राणायामेन ?'' इति उक्तवान् रत्नपतिः ।

''भवता आरम्भे एव कश्चन दोषः कृतः । राज्ञ्याः कृते कम्बलादिकं खलु दत्तम् ? तेन सह सैनिकेभ्यः अपि दत्तम् । अधिकारिभ्यः अपि प्रेषितम् । सन्तुष्टाः ते भवतः साहाय्यं करिष्यन्ति इति भवतः चिन्तनम् आसीत् । एवम् अकृत्वा भवान् स्वयम् एव वस्तूनि स्वीकृत्य सैनिकैः सह राज्ञ्याः निकटं यदि गतवान् स्यात् तर्हि मूल्यम् अपि प्राप्तम् अभविष्यत् । प्रसिद्धिः अपि अभविष्यत् । भवान् प्रचारं कर्तुम् अशक्ष्यत् यत् राज्ञ्या याः शाटिकाः धृताः भवन्ति तादृश्यः अस्माकम् आपणे प्राप्यन्ते इति । तेन अधिक-ग्राहकाः आगमिष्यन् । अस्माकं वाणिज्यम् अपि प्रवृद्धम् अभविष्यत् । अवगतं खलु मया उक्तम् ?'' इति उक्तवान् पिता ।

''आम्, भवता युक्तम् एव उक्तम्'' इति अवदत् रत्नपतिः ।

ततः दशानां दिनाम् अनन्तरं रत्नपतेः पितरं कोषाधिकारी आकार्य - ''भवतः पुत्रस्य विषये यत् अन्याय्यं जातं तत् अधिकृत्य राजा निवेदितः मया । तेन विचारणां कृत्वा दोषिणः दण्डिताः । वस्तूनां मूल्यस्य द्विगुणितं धनं दातव्यं रत्नपतये इति तेन आज्ञप्तम् अस्ति अपि'' इति वदन् द्विलक्षं रूप्यकाणि तस्मै समर्पितवान् ।

एतावन्तं धनराशिं दृष्ट्वा रत्नपतिः तस्य पत्नी च नितरां सन्तुष्टौ जातौ ।



# वार्ताविशेषः




## जन्तुशालायां जन्मदिनोत्सवः

एषः जन्मदिनोत्सवः गते नवेम्बरमासे १५ दिनाङ्के आस्ट्रेलियादेशे ब्रिस्बेन् इत्यत्र जन्तुशालायां प्रवृत्तः । एतम् उत्सवम् आचरन्ती बालिका नान्या । सा अस्ति - हेरियट् नाम कूर्मा, या अद्य १७५ तमं जन्मदिनम् आचरन्ती अस्ति । तद्दिने तस्यै विशिष्टं मृदु मिष्टखाद्यं व्यवस्थापितम् । दर्शकाः तस्यै मृदुमिष्टान्नानि अयच्छन् ।

हेरियट् तदारभ्य जन्मदिनम् आचरति यदा १८३५ तमे वर्षे चार्ल्स् डार्विन् नाम विज्ञानी भीमाकारिणीं राक्षसकूर्माम् ऐसलाण्डमध्ये दृष्टवान् । एषा तदा तदा वासस्थानं परिवर्तितवती । आ गतेभ्यः सप्तदशभ्यः वर्षेभ्यः एषा ब्रिसबेन्जन्तुशालायाम् आतिथ्यं प्राप्नुवती अस्ति । एतस्याः संरक्षकः स्टीव इर्विनः कथयति यत् एषा अग्रिमाणि पञ्चविंशतिं वर्षाणि यावत् अत्रैव स्थास्यति इति । आश्चर्यं नाम प्रपञ्चे एव बहुकालतः जीवन् प्राणी इति प्रसिद्धः अद्वैत्यः नाम कूर्मः कोल्कोत्तायाम् अलिपुरजन्तुशालायाम् अस्ति । तस्य वयः २५५ वर्षाणि इति निर्णीतम् अस्ति । एतं गवर्नर्जनरल् लाईक्लैवः १८७५ तमे वर्षे इंग्लेण्ड्देशतः आनीय कोलकोत्ता-जन्तुशालायै समर्पितवान् आसीत् ।

### न्यूट्रिन्प्रश्नमालिका - 9

१. भूमौ अत्यन्तं शुष्कः प्रदेशः कः ?
अ. सहारामरुभूमिः
आ. गोबीमरुभूमिः
इ. थारमरुभूमिः ई. अटकमामरुभूमिः

२. 'बङ्गालस्य दुःखनदी' इति ख्याता नदी का ?
अ. ब्रह्मपुत्रः आ. दामोदरा
इ. कोसि ई. चम्बल

(उत्तराणि ६३ तमे पृष्ठे)

# चन्दमामाप्रश्नावली - ९



यः समुचितम् उत्तरं दास्यति सः अर्हति रू.२५०/- पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् याहच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतः (पिन्कोड्सहितः) च प्रेषणीयम् । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हः । ४. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या लिख्यताम् । ५. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - ९ इति लेखनीयम् । ६. अक्टोबर्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ७. डिसेम्बर्मासे परिणामः प्रकाशयिष्यते ।

१. विष्णुशब्दस्य निर्वचनं किम् ?
२. प्राचीनाः ग्रीक्महिलाः यां विवाहाधिदेवीं पूजयन्ति स्म तस्याः नाम किम् ?
३. पक्वायां मधुकर्कट्याम् औषधीयगुणयुक्तः कः अंशः प्राधान्येन भवति ?
४. ''मातृप्रेमतः वञ्चितं मां भवान् बाल्यतः एव पोषितवान् । अङ्के उपवेश्य लालयता भवता मदीयाः इच्छाः सर्वाः पूरिताः । मात्रा इव वात्सल्यं प्रदर्शितम् अपि । भवदीयम् उपकारम् अहं न विस्मरामि । दैवयोगात् यदि मया सिद्धिः प्राप्येत तर्हि तत्र भवतः सहयोगः आदौ उल्लिख्यते मया'' इति सिद्धार्थः कृतज्ञतापूर्वकं यम् उक्तवान् तस्य सारथेः नाम किम् ?
५. दक्षिणभारतीये कस्मिंश्चित् क्रीडाङ्गणे तमाखोः उपयोगः निषिद्धः अस्ति । तत् कुत्र अस्ति ?
६. ''राष्ट्राणि सदा युद्धभयेन आक्रान्तानि भवन्तु इति भगवान् सर्वथा न इच्छति । उत्तमं शासनं, शान्तिः, समृद्धिः च मम पुत्राणां भवतु इति तस्य तीव्रा इच्छा'' इति कः पर्शियन्राजः शिलालेखे लेखितवान् ?

७. एतत् चित्रं कस्याः कथायाः ?



# कृपापात्रता

अवन्तीनगरस्य समीपे अरण्यप्रदेशः कश्चन आसीत् । तस्मिन् अरण्यप्रदेशे विद्यमाने ग्रामे माधवः धीरजः चेति उभौ सुहृदौ निवसतः स्म । तयोः गृहयोः मध्ये महत् अन्तरं न आसीत् ।

तौ प्रतिदिनं प्रातः एव गृहात् निर्गत्य वनं गत्वा औषधमूलानि सङ्गृह्य अपराह्ने नगरं प्रति गच्छतः स्म । नगरे तानि वैद्येभ्यः विक्रीय, लब्धेन धनेन परिवारस्य भरणं कुरुतः स्म ।

तौ उभौ अपि परिश्रमशीलौ । माधवः महान् देवभक्तः आसीत् । कदाचित् भगवतः कृपाकटाक्षेण कष्टेभ्यः मम मुक्तिः भविष्यति इति स्वप्नं पश्यति स्म सः । सुखजीवनं यापयितुं भगवान् अवसरं दद्यात् इति चिन्तयति स्म अपि सः ।

धीरजः अपि देवभक्तः एव । तथापि परोपकारे एव तस्य अधिका प्रवृत्तिः ।

ग्रामवनयोः मध्ये काचित् नदी प्रवहति स्म । नद्याः तीरे निम्बकवृक्षस्य मूले किञ्चन देवीमन्दिरम् आसीत् । वनप्रवेशतः पूर्वं तौ भक्तिपूर्वकं देव्याः प्रणामं कुरुतः स्म । वनतः प्रत्यागमनसमये वने लब्धानि द्वित्राणि फलानि देव्यै समर्पयतः स्म । एवंप्रकारेण तयोः दिनानि यान्ति स्म ।

कदाचित् वनतः प्रत्यागमनसमये मन्दिरस्य पुरतः ताभ्यां कश्चन अन्धः वृद्धः दृष्टः । बुभुक्षाकारणेन बलहीनतया च उत्थातुम् अशक्तः आसीत् सः । तस्य वृद्धस्य एतां स्थितिं दृष्ट्वा खिन्नः धीरजः अनुक्षणं तस्मै जलं दत्त्वा तदीयां पिपासां निवारितवान् । तदनन्तरं सः तस्मै खादितुं कतिचन फलानि दत्त्वा नगरदिशि प्रस्थितवान् ।



अन्धस्य वृद्धस्य साहाय्यं किमपि न कृतं माधवेन । वृद्धस्य दयनीयां स्थितिं दृष्ट्वा अपि तेन कापि दया न दर्शिता । भक्तिपूर्वकं देवीं प्रणम्य नगरं प्रति प्रस्थितवान् सः ।

अनन्तरदिने अपि सः अन्धः वृद्धः तत्रैव दृष्टः । धीरजः स्वेन

आनीतासु रोटिकासु द्वयं तस्मै दत्तवान् । वनतः आगत्य फलानि अपि दत्त्वा ततः गतवान् ।



तृतीयं दिनम् अपि सम्प्राप्तम् । तद्दिने सायं धीरजस्य गृहस्य पृष्ठ-भागे स्थितः धेनुबन्धन-स्तम्भः पतितः अभवत् । अतः धीरजः पूर्ववत् तं स्तम्भं निखनितुं भूमौ गर्तं कृतवान् । तदा तेन लोहपात्राघातध्वनिः श्रुतः । पुनरपि खननं यदा कृतं तदा तत्र ताम्रघटः कश्चन लब्धः । तस्मिन् बहूनि सुवर्णनाणकानि आसन् । 'एतत् सर्वं देवीकृपया सञ्जातम् । इतः परम् अहं सुखेन जीवितुं शक्नुयाम्' इति अचिन्तयत् सः ।

तदनन्तरदिने प्रातः धीरजः वृद्धेन मेलितुं रोटिकाः स्वीकृत्य गतवान् । तत्र तेन सः वृद्धः न दृष्टः । अतः सः देवीपूजां कृत्वा गृहम् आगतवान् ।

गर्ते प्राप्तेन धनेन तेन भूमिः क्रीता, कृषिः च आरब्धा । तदा तदा वनं गत्वा मूलानि सङ्गृह्य नगरे विक्रयणम् अपि करोति स्म सः । एवं सुखेन गतानि तदीयानि दिनानि ।

एतत् सर्वं दृष्ट्वा महत् आश्चर्यं प्राप्तवान् माधवः । कदाचित् सः वनतः आगच्छन् नद्यां पादादिकं प्रक्षाल्य देवीमन्दिरस्य पुरतः उपविश्य उक्तवान् – ''अम्ब ! अहम् अपि भक्तिपूर्वकं पूजां कुर्वन् एव अस्मि । तथापि मयि भवत्या कृपा न दर्शिता । किम् अग्रे अपि मया एवम् एव कष्टमयं जीवनं यापनीयं भविष्यति ?'' इति ।

निराशः सः श्रान्तः सन् तत्रैव सुप्तवान् । तदा तस्य स्वप्ने देवी आगत्य उक्तवती – ''मयि भवतः अपि श्रद्धा भक्तिः च अस्ति एव । तेन अहं प्रसन्ना । किन्तु निश्शक्तजनानां विषये आदरः दया वा नास्ति भवतः । वराकस्य अन्धस्य वृद्धस्य साहाय्यं न कृतं भवता । केवलेन मम पूजनेन किम् ? भवादृशानां कृते सम्पद् दत्ता चेत् कः लाभः भवेत् समाजस्य ? धीरजसदृशेभ्यः दत्ता सम्पत् निर्गतिकानां साहाय्याय विनियुक्ता भवेत् । अतः एव सः सम्पदः दानेन अनुगृहीतः मया'' इति ।

माधवः देव्याः वचनानि श्रुत्वा आश्चर्यम् अनुभवन् जागरणं प्राप्य दीनस्वरेण – ''मातः ! भवत्या मम बुद्धिमान्द्यं निवार्य नेत्रोद्घाटनं कृतम् । अग्रे एतादृशं दोषम् अहं न आचरिष्यामि । दुर्बलानां साहाय्यम् अहम् अवश्यं करिष्यामि'' इति उक्त्वा सश्रद्धं देवीं प्रणम्य गृहं प्रति प्रस्थितवान् ।

**– के. राजीवरेड्डिः, आन्ध्रप्रदेशः**

# अभिप्रायप्रकटने वास्तविकी धीरता







अद्यतनं संयुक्तामेरिकाराष्ट्रं १८६१ - १८६५ वर्षयोः मध्ये द्विधा विभक्तम् आसीत् । दास्यपरम्परा रक्षणीया उत नाशनीया इति विषयम् अधिकृत्य तयोः परस्परं कलहः भवति स्म ।

अमेरिकादेशस्य उत्तरभागीयाः दास्य-परम्परां त्रोटयित्वा संयुक्तताम् (यूनियन्) अङ्गीकृतवन्तः । किन्तु दक्षिणभागीयाः अत्र सहमताः न आसन् । अतः उभयोः अपि भागयोः मध्ये शीतलसमराः तदा तदा भवन्ति स्म एव ।

किन्तु इदानीम् अत्र या घटना प्रस्तूयते तत्र सः प्रमुखः ऐतिहासिकप्रसङ्गः प्राधान्यं न आवहति । दक्षिणभागस्य अध्यक्षस्य मि. जाफरसनुडेविसनामकस्य, सेनाधिपतेः राबर्ट्-लीवर्यस्य च मध्ये प्रवृत्तं सङ्क्षेपसम्भाषणमेव प्रधानम् अत्र ।

कदाचित् अध्यक्षः सेनापतिम् आकार्य सूचितवान् - ''अस्माकं कस्मिंश्चित् प्रधान-विभागे अत्युन्नतं पदं रिक्तम् अस्ति । तत्र कश्चन समर्थः नियोक्तव्यः अस्ति अपि । अत्र अमुकः नियोक्तव्यः इति मम इच्छा । अमुकं जनं भवान् जानाति एव । अस्य विभागस्य प्रधानपदे नियोज्यमानः अत्यन्तं

निष्कपटः, उत्साही, सर्वशुद्धश्च भवेत् । एतत् पदम् अलङ्कर्तुम् अमुकः योग्यः अस्ति किम् ? एतस्मिन् विषये भवतः अभिप्रायः कः ? सः योग्यः इति यदि भवान् मन्येत तर्हि सः तस्मिन् पदे नियुक्तिम् अर्हेत्'' इति ।

तदा अध्यक्षस्य कार्यदर्शी अर्थपूर्णहासं विकीर्णवान् सकृत् सेनापतिं पश्यन् । यतः तस्य दृढः विश्वासः आसीत् यत् अध्यक्षेण सूचितः जनः यद्यपि एतस्मै स्थानाय अर्हः एव, तथापि सेनापतिः एषः अमुकस्य विषये उत्तमानि वचनानि कदापि न वदेत् एव इति ।

तदा सेनापतिः अवदत् - ''श्रीमन् ! एतस्मै पदाय इतोऽपि उत्तमः जनः प्रायः अन्यः न लभ्येत एव । तत्रभवता सूचितः जनः समर्थः योग्यः च इत्यत्र विप्रतिपत्तिः एव नास्ति'' इति ।

''अहो, आश्चर्यम् !!'' इति वचनं निर्गतं कार्यदर्शिनः मुखात् अप्रयत्नेन एव ।

''अत्र आश्चर्यकारणं किम् अस्ति ?'' इति सहजस्वरेण पृष्टवान् सेनापतिः । अध्यक्षः अपि कुतूहलेन कार्यदर्शिनः मुखम् अपश्यत् ।

तदा कार्यदर्शी अवदत् - ''सेनापतिवर्य ! भवन्तम् अधिकृत्य अमुकस्य मुखात् उत्तमं पदम् एकम् अपि न निस्सृतम् अद्यावधि । भवन्तं विरुध्य अपभाषणं बहुधा करोति सः । अवसरे प्राप्ते भवतः दूषणम् अपि करोति सः । तादृशस्य चयनम् अङ्गीकृतं भवता एतस्मै उन्नताय स्थानाय । अतः एव मया आश्चर्यं प्राप्तम्'' इति ।

''एतत् अहं जानामि एव कार्यदर्शिवर्य ! अध्यक्षेण पृष्टं - तस्य विषये मम अभिप्रायः कः इति । मम विषये तस्य अभिप्रायः कः इति तु तेन न पृष्टम्'' इति निर्विकारभावनया अवदत् सेनापतिः ।

## चन्दमामाप्रश्नावली - ७ (अगस्ट् - २००६)

**समुचितम् उत्तरं प्रेषितवतः संस्कृतापूतेः वाचकस्य नाम अधोनिर्दिष्टम् । वाचकानां ज्ञानाय सप्तम्याः प्रश्नावल्याः उत्तरम् अधः दत्तम् अस्ति । अन्ये अपि वाचकाः एतस्यां स्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।**

**अमरेशगुरुः**
द्वारा - जितेन्द्रनाथगुरुः, पद्मपुरम्, राजबोडासम्बरम्
बरगढ, **ओडिशा - ७६८ ०३६**

## सप्तम्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. कारैकल् अम्मयार् इति ।
२. धर्माचरणम् इति ।
३. यकृत् ।
४. डा॰ सर्वेपल्लिराधाकृष्णन्वर्यस्य ।
५. अनन्तपुरजनपदे गुडिबयलुग्रामे ।
६. माता जीजाबायी, गुरुः समर्थः रामदासः च ।
७. तमिळुलेखकः जयकान्तन् ।
८. बेबिलोनदेशीयायाः अनुश्रुतकथायाः 'आहारसेवी भगवान्' इत्यस्याः ।



# स्वजनबोधः

वल्लभश्रेष्ठी रामपुरस्य प्रसिद्धः सुवर्ण-वणिक् । नगरस्य महाधनिकाः सर्वे तस्मिन् विश्वासं कुर्वन्ति स्म । अतः ते सर्व-विधानि आभूषणानि तस्य आपणात् एव क्रीणन्ति स्म । तस्य रामदेवः वासुदेवः चेति यमलौ पुत्रौ । वल्लभः तत्पत्नी च पुत्रौ महता प्रेम्णा पालयतः स्म । यतः बहूनां वर्षाणां स्वप्नस्य साकारभूतौ आस्तां तौ । प्रीतिः अधिका इति कारणेन तयोः आसक्तिः न आसीत् पठने । सर्वदा मित्रैः सह भ्रमणं क्रीडनं च तयोः कार्यम् आसीत् ।

पुत्रयोः एतादृशं व्यवहारं दृष्ट्वा वल्लभः चिन्ताक्रान्तः सन् पत्नीम् उक्तवान् - ''एतौ भवती अधिकया प्रीत्या पोषितवती । अतः इदानीं तौ दायित्वविहीनौ अयोग्यौ च जातौ स्तः । मम मरणानन्तरं न जाने, तौ वाणिज्य-दायित्वं कथं निर्वक्ष्यतः इति'' इति ।

तदा तस्य पत्नी अवदत् - ''अस्माकं समीपे अमिता सम्पत्तिः अस्ति, यस्याः च उपयोगतः अस्माकं प्रपौत्रादयः अपि सुखेन जीवनं कर्तुं शक्नुयुः । अतः एतौ परिश्रमं न कुरुतः चेदपि न कापि हानिः'' इति ।

एतया सह एतस्मिन् विषये चर्चाकरणं व्यर्थमेव इति विचिन्त्य वल्लभः तूष्णीकः अभवत् ।

दिनद्वयानन्तरं पुत्रौ आहूय सः अवदत् - ''विजयः नाम मम मित्रं कर्णपुरे वसति । एतत् पत्रं तस्मै दत्त्वा आगन्तव्यम् । एतत् बहु रहस्ययुक्तं कार्यम् । अतः एव अहं भवन्तौ प्रेषयन् अस्मि । कर्णपुरं विशालं नगरम् । तत् दृष्ट्वा आगच्छताम्'' इति । तौ तस्मिन् एव दिने कर्णपुरं प्रति प्रस्थितवन्तौ ।

विजयः ताभ्याम् आनीतं पत्रं पठित्वा सर्वम् अवगत्य तयोः सत्कारं कृत्वा - 'नगरं दृष्ट्वा आगच्छताम्' इति उक्त्वा तौ प्रेषितवान् । विजयस्य पत्नी अपि तौ आदरेण एव दृष्टवती । विजयस्य अपि यमले पुत्र्यौ - श्रेष्ठा श्वेता च इति । सुन्दर्यौ बुद्धिमत्यौ च ते वासुदेवाय,

रामदेवाय च अरोचेताम् ।

सप्ताहानन्तरं वल्लभनिकटात् विजयस्य नाम्ना पत्रम् आगतम् । तस्मिन् पत्रे पुत्रौ सम्बोध्य वल्लभः लिखितवान् आसीत् - 'दिनचतुष्टयात् पूर्वं लुण्ठाकाः अस्माकम् आपणं प्रविश्य सर्वं चोरितवन्तः । समीकरणार्थं जनैः यानि आभूषणानि दत्तानि आसन् तानि अपि चोरितानि अभवन् । जनैः दत्तानि आभूषणानि मया न प्रत्यर्प्यन्ते चेत् जनाः मां दोषिणं भावयन्तः राजसमीपं नयेयुः । राज्ञा महादण्डनं दीयेत इति अपि । एतम् अपमानं सोढुम् अशक्नुवन् अहं ग्रामं त्यक्त्वा गच्छन् अस्मि । भगवतः कृपा अस्ति चेत् पुनः कदाचित् मेलिष्यामः'' इति । पत्रं पठितवन्तौ वासुदेव-रामदेवौ हतप्रभौ जातौ ।



एतं विषयं ज्ञातवतः विजयस्य अपि व्यवहारे परिवर्तनम् आगतम् । सः तौ अवदत् - ''कार्यहीनौ भवन्तौ सुखेन पोषयितुम् अहं भवतोः पिता इव कोट्यधिपतिः न । अतः भवन्तौ किमपि कार्यम् अन्विष्य आजीविकां प्राप्नुतः चेत् वरम्'' इति ।

एतम् अपमानं सोढुं तौ न शक्तौ । तथापि किं वा कुर्यातां वराकौ ? यतः तौ कार्यं किमपि न जानीतः स्म । कथञ्चित् धैर्यं प्राप्य - ''कृपया किमपि कार्यं दापयतु, येन जीवनं निरूढं भवेत्'' इति विजयम् एव दैन्येन निवेदितवन्तौ तौ । विजयेन तयोः कार्यस्य व्यवस्था कृता । स्वस्य एव आपणे गणना-लेखनकार्यं रामदेवाय तेन दत्ता, वासुदेवाय च उद्यानकार्यं दत्तम् । उद्यानकार्येण सह तत्र उत्पन्नानां शाकानां विपणौ विक्रयणम् अपि करणीयं भवति स्म वासुदेवेन । आरम्भे उभयोः अपि क्लेशः आसीत् कार्यकरणे । कदाचित् रामदेवः अनुजं वासुदेवम् उक्तवान् - ''विजयः महाकठोरः अस्ति इति इदानीं ज्ञायते मया । गणनायां दशरूप्यकाणां न्यूनता यदि भवेत् तर्हि तस्मिन् दिने मह्यं भोजनम् एव न ददाति सः'' इति ।

''आम्, सत्यं भ्रातः । कण्डोलेषु शाकानि पूरयित्वा पञ्चक्रोशमितं दूरं नीत्वा विक्रयणं करोमि अहम् । शकटव्यवस्थाम् अपि न चिन्तयति सः । निर्दयः जातः अस्ति विजयः'' इति अवदत् वासुदेवः ।

''प्रवृत्तं सर्वं विस्मरतु । पिता वदति स्म - अनुभूतस्य कष्टस्य फलं कदाचित् वा प्राप्येत एव इति । आवयोः जीवने अपि सुखमयानि दिनानि आगमिष्यन्ति एव'' इति सान्त्वनं

कृतवान् रामदेवः ।

यथा यथा दिनानि व्यतीतानि तथा तथा तयोः कार्यकौशलं, कार्यतत्परता च अधिका जाता । गच्छता कालेन तौ वाणिज्यस्य तन्त्राणि अपि ज्ञातवन्तौ । विजयस्य पुत्र्यौ तयोः विषये आदरवत्यौ जाते । प्रतिमासं प्राप्यमाणे वेतने किञ्चित् अवशेषयन्तौ तौ किञ्चित् धनं सञ्चितवन्तौ अपि ।

षण्णां मासानाम् अनन्तरं वल्लभः पत्न्या सह कर्णपुरम् आगतवान् । आगतौ मातापितरौ दृष्ट्वा पुत्रयोः नेत्रे अश्रुबिन्दुभिः पूर्णे जाते ।

सर्वसमर्थयोः पुत्रयोः दर्शनेन मातापितरौ अपि परमानन्दं प्राप्तवन्तौ ।

वल्लभः विजयम् अवदत् - ''मित्र ! या सम्पत्तिः लुण्ठिता आसीत् सा पुनः प्राप्ता अस्ति मया । इदानीं वयं स्वग्रामं गच्छामः । भवता कृताय साहाय्याय अनेके धन्यवादाः'' इति ।

वल्लभस्य वचनानां रहस्यं ज्ञात्वा हसन् उक्तवान् विजयः - ''पुत्राभ्यां सह स्नुषे अपि नयतु भवान् । सौभाग्यात् एव मम पुत्र्यौ योग्यं पतिं प्राप्नुवत्यौ स्तः'' इति ।

वल्लभः हर्षचित्तः भूत्वा विजयस्य प्रस्तावम् अनुमतवान् ।

विवाहानन्तरं द्वितीये दिने विजयः एकान्ते वल्लभं पृष्टवान् - ''मम वस्त्रवाणिज्यात् अपि भवतः वाणिज्यं बृहत् । भवान् मत्तः अपि वाणिज्ये नितरां दक्षः अपि । भवान् स्वयं पुत्रौ समीकृत्य कार्ये योजयितुम् अशक्ष्यत् एव । एवं स्थिते अपि चौर्यव्याजं कल्पयित्वा तौ मम निकटे कर्मकरौ किमर्थं कारितवान् भवान् ?'' इति ।

''यथा गृहपरिसरे प्रवृद्धं सस्यम् औषधाय न भवति तथा स्वजनैः कृतः उपदेशः अपि मूल्यवान् न भवति । यावत् तौ मम समीपे भवतः तावत् परिश्रमं न कुरुतः इति अहं जानामि स्म । अतः एव तौ मया भवत्समीपं प्रेषितौ । अत्र पूरकं वातावरणं सृष्टं भवता । अतः एव मम आशयः सिद्धः अभवत् । एतदर्थं कृतज्ञः अस्मि अहम्'' इति अवदत् वल्लभः ।

अल्पेन एव कालेन रामपुरे वासुदेवः रामदेवः च प्रसिद्धौ भूत्वा 'पितुः अनुरूपौ पुत्रौ' इति ख्यातिं प्राप्तवन्तौ ।



# असफलता

कदाचित् चन्द्रग्रामजनाः वृक्षस्य अधः वितर्दौ उपविश्य जल्पन्तः आसन् । तदा तेन मार्गेण क्षुवं कुर्वन् गच्छन् बालकृष्णः नाम बालः तैः दृष्टः । तदा तत्रत्येषु अन्यतमः महेशः परिहाराय तं बालम् असूचयत् – ''मम अपि एषा एव स्थितिः आसीत् । मम पत्नी पीनसनिवारणाय काश्चन गुलिकाः दत्तवती । ततः अहं स्वस्थः अभवम् । अतः भवान् मम पत्न्याः निकटं गत्वा गुलिकाः प्राप्य गच्छतु'' इति ।

''अस्तु, तथैव करोमि'' इति उक्त्वा सः बालकः ततः निर्गतवान् ।

''बालकृष्णः कस्यापि वचनं न पालयति । तादृशः अपि यथा अङ्गीकुर्यात् तथा अकरोत् भवान् । अहो, भवदीयं सामर्थ्यम् !'' इति तम् अश्लाघत कश्चन वृद्धः ।

''अहं ज्येष्ठान् अपि वचनेन अङ्गीकारयामि लीलया । तादृशी विशिष्टा प्रतिभा अस्ति मम'' इति सगर्वम् उक्तवान् महेशः ।

तदा पार्श्वे उपविष्टेन रमेशेन कथितम् – ''अन्येषां विषये किं चर्चया ? अन्यस्य वचनमात्रे मम न विश्वासः । मम पृष्ठतः वटः खलु अस्ति ? तं निम्बवृक्षत्वेन अङ्गीकारयितुं किं भवान् शक्नुयात् ?'' इति ।

रमेशस्य पृष्ठभागे वस्तुतः निम्बकः एव आसीत् । अतः क्रुद्धः महेशः – ''भवतः पृष्ठतः निम्बकः एव अस्ति । तं किमर्थं वटं वदति भवान् ?'' इति वदन् कानिचन पर्णानि अवचित्य तस्मै अदर्शयत् ।

महेशेन आनीतानि पर्णानि अवलोकितवता रमेशेन उक्तम् – ''एतानि पर्णानि निम्बवृक्षस्य एव इति तु अङ्गीक्रियते मया । किन्तु यस्य वृक्षस्य विषये चर्च्यते तस्मात् एव अवचित्य एतानि आनीतानि इत्यत्र कथं भवेत् मम विश्वासः ?'' इति ।

''उपस्थिताः जनाः एव अत्र प्रमाणम्'' इति अवदत् महेशः । तदा रमेशः अवदत् – ''द्रष्टुं समर्थयोः मम नेत्रयोः सत्योः का आवश्यकता अन्येषां वचनमात्रे विश्वासस्य ?'' इति ।

''अस्तु, सकृत् भवान् पृष्ठतः परिवृत्य पश्यतु । भवतः नेत्रे निर्दोषे चेत् सः निम्बकः एव, न तु वटः इति भवान् अवगच्छेत् एव'' इति अवदत् महेशः ।

''परिवृत्य पृष्ठतः दर्शनस्य इच्छा मम नास्ति । अपेक्ष्यते चेत् भवान् एव तं वृक्षं मम पुरतः आनीय स्थापयतु । अन्यथा मम अङ्गीकारणे स्वस्य असफलताम् अङ्गीकरोतु'' इति ।

रमेशस्य एतानि वचनानि श्रुत्वा सर्वे अहसन् । महेशः रमेशस्य पुरतः पराजितः अभवत् ।





# राज्ञः दुःस्वप्नः

शूरपुरस्य राजा सुमुखः सूर्यस्य महाभक्तः । प्रतिदिनं सः उदयसमये सूर्यम् अवश्यं पश्यति स्म । सूर्योदयदर्शनानन्तरम् एव अन्येषु कार्येषु प्रवृत्तिः तस्य ।

अथ कदाचित् सः स्वप्ने कश्चित् विकटम् अट्टहासम् अशृणोत् । तदनन्तरम् एव तेन कश्चन ध्वनिः अपि श्रुतः – ''राजन् ! अद्य शुक्रवासरः । परश्वः भानुवासरे सूर्योदयसमये भवतः मरणं भविष्यति । यदि तस्मिन् दिने भवतः मरणं कथमपि न भवेत् तर्हि भवान् दीर्घायुः भवेत्'' इति ।

एतत् श्रुत्वा राजा नितरां दिग्भ्रान्तः । तस्य शरीरं स्वेदेन आर्द्रं जातम् । सः राज्ञीम् उत्थाप्य स्वप्नवृत्तान्तम् अश्रावयत् ।

तस्मिन् धैर्यं पूरयन्ती राज्ञी अवदत् – ''स्वप्नाः कदापि वास्तविकाः न भवन्ति । अतः अलं चिन्तया । सर्वं विस्मृत्य निश्चिन्ततया स्वपितु भवान्'' इति ।

किन्तु एतस्मात् राज्ञः भीतिः न अपगता । सः झटिति एव सेनाधिपतिं मन्त्रिणं च आकार्य स्वप्नवृत्तान्तं निवेदितवान् । 'एतस्याः विपदः निवारणाय कोऽपि मार्गः चिन्तनीयः एव' इति सूचितवान् च ।

मन्त्री राजानं समाश्वास्य – 'महाराज ! अलं चिन्तया । अहं यथोचितं करिष्यामि'' इति अवदत् । किन्तु सोऽपि न जानाति स्म – एतद्विषये किं करणीयम् इति । ततः तेन राजपुरोहितः राजवैद्यः च आनायितः ।

राजपुरोहितः राज्ञः जन्मकुण्डलीं सम्यक् परिशील्य अवदत् यत् राज्ञः जातके ग्रहगतयः उत्तमाः सन्ति, प्राणापायभीतिः कापि नास्ति एव इति । राजवैद्यः अपि राजानं सम्यक् परीक्ष्य अवदत् यत् राज्ञः शरीरे अपायकरः कोऽपि रोगः नास्ति, अतः अस्वास्थ्यकारणतः राज्ञः मरणम् असम्भवम् इति ।

सेनाधिपतिः तावता प्रत्यागत्य अवदत् –

''महाराज ! समग्रे अन्तःपुरे मया अन्वेषणं कारितम् । विद्रोहचिह्नं किमपि सर्वथा न दृष्टं तत्र । नगरवीथ्यां द्वित्राः अज्ञातपूर्वाः दृष्टाः । तेषां विचारणा कृता । किन्तु ते अपायकारिणः न इति सिद्धम्'' इति ।

एतस्य सर्वस्य श्रवणात् अपि राज्ञः चिन्ता न अपगता । रविवासरे सूर्योदयसमये मम मरणस्य सम्भावना अस्ति एव इति चिन्तयति स्म सः । राज्ञः भयस्य निवारणाय मन्त्रिणा मान्त्रिकः कश्चन आनायितः । सः मण्डलं विलिख्य तत्र पिष्टमयीः मूर्तीः संस्थाप्य विलक्षणान् मन्त्रान् उच्चार्य पूजां कृत्वा अवदत् - ''महाराज ! कापि दुष्टा शक्तिः भवतः समीपम् आगन्तुम् अपि न अर्हति'' इति ।

तथापि राज्ञः आतङ्कः न अपगतः । समग्रे शनिवासरे तस्य सर्वे व्यवहाराः आतङ्कपूर्णाः एव आसन् । तस्मिन् दिने आहारादिकम् अपि न सेवितं तेन ।

सः मन्त्रिणम् आहूय अवदत् - ''यः श्वः सूर्योदयस्य स्तम्भनं करिष्यति तस्मै राज्यस्य अर्धभागः दास्यते इति उद्घोषणं कार्यताम्'' इति ।

राज्ञः मतिः सर्वथा विकला जाता अस्ति इति अवगतवान् मन्त्री । तथापि राजाज्ञा तु तेन पालनीया आसीत् एव । अतः राज्ञा यथा सूचितं तथा घोषणं कारितवान् सः ।

सायङ्कालसमये ज्ञानेश्वरः नाम कश्चन युवकः राज्ञः समीपम् आगत्य - ''महाराज ! मया भवतः घोषणा श्रुता । अहं श्वः सूर्योदयस्य स्तम्भनं करिष्यामि, भवन्तं मरणात् रक्षिष्यामि च'' इति अवदत् ।



राजा तम् आश्चर्येण पश्यन् अपृच्छत् - ''भवान् कथं सूर्यस्य उदयं स्तम्भयिष्यति ? सुर्यः तु कस्यापि आदेशं न पालयति, कस्यापि अनुज्ञां न प्रतीक्षते वा । अतः सूर्योदयस्य स्तम्भनम् असाध्यं खलु !'' इति ।

''महाराज ! असाध्यं किमपि नास्ति लोके । अहं येन क्रमेण सूर्योदयं स्तम्भयिष्यामि स च क्रमः तु रहस्यमयः । परम्परागतं कौशलं तत् । अतः तं क्रमम् अहम् अत्र न विवृणोमि । इतः पूर्वं मया बहुवारम् एवं कृतम् । अतः मम सामर्थ्यविषये सन्देहः मास्तु भवतः । किन्तु एतदर्थं भवता केचन नियमाः पालनीयाः भवन्ति'' इति अवदत् सः युवकः ।

''मया पालनीयाः ते नियमाः के ?'' इति अपृच्छत् राजा ।

''श्वः सूर्योदयात् पूर्वम् एव भवता

उत्थातव्यम् । पूर्वस्यां दिशि स्थितं वातायनम् उद्घाट्य आकाशः एव निर्निमेषदृष्ट्या द्रष्टव्यः । एवं करणात् सूर्योदयः भवतः दृष्टिगोचरः न भविष्यति । भवता राजधान्याम् एतदपि घोषणीयं यत् यावत् घण्टानादः न श्रूयते तावत् केनापि गृहात् बहिः न आगन्तव्यम् इति । एतावतीं व्यवस्थां कृत्वा निश्चिन्ततया निद्रां कर्तुम् अर्हति भवान्'' इति अवदत् सः युवकः ।

अनन्तरदिने प्रातः राजा पूर्वाभिमुखतया वातायनस्य पुरतः उपविष्टवान् । पर्वतभागे कालमेघः इव स्थितः महान् धूमराशिः तेन दृष्टः । घण्टां यावत् स च धूमराशिः तत्र स्थितः आसीत् । अत्रान्तरे सूर्योदयसमयः अतीतः आसीत् । एतस्मात् राजा अचिन्तयत् यत् मम प्राणापायः अपगतः इति । अतः सः निश्चिन्तः सन् शयनप्रकोष्ठात् बहिः आगतवान् । ततः अल्पे एव काले धूमराशिः अपगतः, सूर्यश्च दृष्टिगोचरतां गतः । नगरवीथीषु घण्टावादनं कृतम् । जनाश्च गृहात् बहिः आगतवन्तः । दैनन्दिनकार्याणि यथापूर्वम् आरब्धानि ।

अर्धराज्यं प्राप्तुं ज्ञानेश्वरः न आगतः एव । सः किमर्थं न आगतः इति मन्त्री एकः एव जानाति स्म । यतः राज्ञः चिन्तायाः अपसारणाय सः एव ज्ञानेश्वरं राजसमीपं प्रेषितवान् आसीत् ।

सूर्योदयस्य स्तम्भनं शक्यम् इति भावः आदौ तेन राज्ञि उत्पादितः । ततः सहस्रशः विश्वासार्हाणां सैनिकानां साहाय्येन शुष्कतृणानि पूर्वपर्वतप्रदेशीयम् अरण्यं प्रति नीतानि । तदुपरि जलसेचनं कारितम् । ततः सूर्योदयात् किञ्चित् पूर्वं तत्र अग्निः योजितः । तेन महान् धूमराशिः सर्वत्र प्रसृतः । धूमकारणतः सूर्यः दृष्टिगोचरः न जातः ।

एतस्मात् राज्ञः चिन्ता भीतिः च अपगता । मन्त्री अपि विगतचिन्तः जातः ।

'राजा भीतिमान् इति यदि ज्ञायेत तर्हि जनाः तस्मिन् अनादरवन्तः भवेयुः । इदानीं तु तादृशः अवसरः नास्ति एव' इति चिन्तयन् सः सन्तुष्टः अभवत् ।

एवं मन्त्री विवेकवर्धनः स्वस्य कौशलेन कार्यं साधितवान् । राज्ञः प्रजानां च आदरः अपि तेन प्राप्तः ।





# कृतज्ञता

बहोः कालात् पूर्वं प्रवृत्ता घटना एषा ।

ब्रह्मदत्तः नाम राजा पूर्वं काशीराज्यस्य शासनं करोति स्म । काशीनगरात् अनतिदूरे एव तक्षकाणां कश्चन ग्रामः आसीत् । तत्र पञ्चशतं तक्षकाः निवसन्ति स्म । ते प्रातः एव गृहात् निर्गत्य नौकाभिः नदीं तीर्त्वा अरण्यं गच्छन्ति स्म । तत्र वृक्षान् कर्तयित्वा, नौकासु पूरयित्वा आनयन्ति स्म ।

तस्मिन् अरण्ये काचित् गजी आसीत् । कदाचित् तस्याः पादे क्षुद्रः कश्चन दारुखण्डः संलग्नः अभवत् । ततः महतीं वेदनाम् अनुभूतवती सा । तया महान् प्रयत्नः कृतः । तथापि पादात् न निर्गतः एव सः क्षुद्रः दारुखण्डः ।

तया वृक्षकर्तनध्वनिः दूरात् श्रुतः । खञ्जन्ती सा तक्षकाणां समीपं गतवती ।

तां दृष्ट्वा तक्षकाः ज्ञातवन्तः यत् एषा काञ्चित् बाधाम् अनुभवन्ती अस्ति इति । गजी तेषां समक्षे स्थातुम् अशक्ता सती शयितवती ।

तक्षकाः विविधैः उपकरणैः तस्याः पादे संलग्नं दारुखण्डं निष्कास्य व्रणस्य चिकित्सां कृत्वा पादे पट्टिकां बद्धवन्तः ।

कतिपयेषु एव दिनेषु सा गजी भ्रमणे समर्था अभवत् । अस्य उपकारस्य प्रत्युपकाररूपेण सा तक्षकाणां साहाय्यम् आरब्धवती ।

पतितानि दारूणि उन्नीय शुण्डया गृहीत्वा नौकापर्यन्तम् आनयति स्म सा । भारस्य उन्नयनविषये सदापि सा सर्वविधं साहाय्यं करोति स्म ।

अतः अल्पे एव काले तस्यां तक्षकाणां स्नेहः प्रवृद्धः । सर्वे तक्षकाः गृहात् आनीतात् स्वीयात् पाथेयात् कञ्चन भागं तस्यै प्रतिदिनं प्रयच्छन्ति स्म ।

बहूनि दिनानि अतीतानि । सा पुत्रं प्रसूतवती । तस्याः पुत्रः ऐरावतजातेः इति कारणेन



श्वेतः आसीत् । गजी वार्धक्यकारणेन भ्रमणे धावने च असमर्था अभवत् । तदा सा स्वपुत्रं तक्षकाणां हस्तगतं कृत्वा अन्यत् अरण्यं प्रति गतवती ।

तदनन्तरं सः श्वेतः गजः तक्षकाणां साहाय्यम् आरब्धवान् । तेषाम् आहारं प्रीत्या खादन् बालान् स्वपृष्ठे उपवेश्य अरण्ये भ्रामयति स्म सः । तान् बालान् नदीं नीत्वा जलेन स्नापयति स्म अपि ।

एवं महता आनन्देन दिनानि यापितानि । तं श्वेतं गजं पुत्रसमानं भावयन्ति स्म सर्वे तक्षकाः ।

अरण्ये उत्तमजातीयः श्वेतः गजः कश्चन अस्ति इति वार्ता यदा राज्ञा ब्रह्मदत्तेन ज्ञाता तदा सः तम् आनेतुं सेनाबलेन सह अरण्यम् आगतवान् ।

'प्रासादनिर्माणाय दारूणि नेतुम् आगतः अस्ति राजा' इति चिन्तितम् आसीत् तैः तक्षकैः ।

अतः ते राजानम् उक्तवन्तः - ''महाराज ! का आवश्यकता आसीत् अरण्यं प्रति भवतः आगमनस्य ? यदि भवान् आदेशम् अदास्यत् तर्हि वयम् एव भवतः प्रासादं प्रति दारूणि प्रापयिष्याम'' इति ।

''दारूणां निमित्तम् अत्र न आगतवान् अहम् । एतं श्वेतं गजं नेतुम् एव आगतवान् अस्मि'' इति वदन् स्वस्य आगमनस्य उद्देशं प्राकटयत् राजा ।

''एवं तर्हि कृपया नयन्तु गजम् एतम्'' इति अवदन् तक्षकाः ।

तस्य गजस्य नयनाय राजादिभिः बहुधा प्रयासः कृतः । तथापि सः गजः तु तैः सह गन्तुं सिद्धः न अभवत् ।

गजस्य अनङ्गीकारस्य मुख्यं कारणं ज्ञात्वा तक्षकवृद्धः कश्चित् राजानम् उक्तवान् - ''प्रभो ! एषः विवेकी पशुः अस्ति । एतं भवान् नयति चेत् तक्षकाणां महती हानिः भविष्यति । तस्याः हानेः पूरणाय धनराशयः समर्प्यन्ते चेत् एषः भवद्भिः सह प्रतिष्ठेत'' इति ।

गजस्य चतुर्णां पादानां शुण्डायाः च समीपे लक्षमितः सुवर्णनाणकराशिः एव स्थापितः राज्ञा । 'तक्षकेभ्यः एतानि वितीर्यन्ताम्' इति आदेशः कृतः अपि तेन ।

तथापि सः गजः एकं पदम् अपि अग्रे न स्थापितवान् । ततः राजा तक्षकाणां स्त्रीभ्यः बालेभ्यः च वस्त्राणि वितीर्णवान् । तदा सः गजः राज्ञा सह गमनाय विना विरोधं सिद्धः

अभवत् ।

राजा महता वैभवेन सवाद्यघोषं तं गजं काशीनगरम् आनीतवान् । वीथीषु शोभायात्रा कृता ।

राजा तस्य आवासाय उत्तमां व्यवस्थां कल्पयित्वा तं पट्टगजं कृतवान् । महाराजात् ऋते अपरः कोऽपि तस्य उपरि न आरोहति स्म ।

श्वेतगजस्य आगमनेन काशीराज्यं चतसृषु दिक्षु प्रख्यातम् अभवत् । महाबलवन्तः अपि राजानः गजस्य प्रभावेण काशीराज्येन पराजिताः भवन्ति स्म ।

कतिपयानां दिनानाम् अनन्तरं राज्ञी गर्भवती जाता । गर्भे बोधिसत्त्वः वर्धमानः आसीत् । सप्ताहानन्तरं राज्ञः उत्तरदायी आगमिष्यतीति सोत्साहं प्रतीक्षारताः आसन् जनाः ।

तादृश्याम् एव स्थितौ दुर्दैववशात् तस्य देशस्य महाराजः इहलोकयात्रां समाप्य दिवं गतः अभवत् ।

एतम् एव स्ववसरं मन्यमानः कोसलदेशस्य राजा काशीराज्यम् आक्रान्तुम् इच्छन् ससैन्यं प्रस्थितवान् ।

एतत् ज्ञातवन्तः काशीराज्यस्य मन्त्रिणः परस्परं समालोच्य अन्तिमनिर्णयत्वेन कोसलराजं प्रति सन्देशं प्रेषितवन्तः - ''अस्माकं राज्ञी सप्ताहाभ्यन्तरे प्रसविष्यते । तस्याः पुत्री जनिष्यते चेत् भवान् काशीराज्यं वशीकर्तुम् अर्हति । पुत्रः जनिष्यते चेत् रणरङ्गे वयं भवतः सेनां सम्मुखीकरिष्यामः'' इति ।

कोसलराजेन सप्ताहात्मिका प्रतीक्षा अनुमता । तस्मिन् सप्ताहे राज्ञी बोधिसत्त्वाय जन्म दत्तवती । अतः युद्धम् अपरिहार्यम् एव जातम् ।

वचनानुसारं काशीराज्यस्य सेना कोसल-



सेनया सह युद्धम् आरब्धवती । किन्तु युद्धे कोसलसेनायाः एव प्राबल्यं दृष्टम् । एतत् दृष्ट्वा काशीराज्यस्य मन्त्रिणः चिन्ताक्रान्ताः जाताः ।

ते महाराज्ञीसमीपं गत्वा निवेदितवन्तः - ''महाराज्ञि ! युद्धे शत्रुपक्षस्य एव शक्तिः अधिका दृश्यते । प्राणान् पणीकृत्य अस्माकं सैनिकाः युद्धं कृतवन्तः एव । तथापि प्रयोजनं किमपि न सिद्धम् । इदानीं रणरङ्गे अस्माकं पट्टगजस्य प्रवेशेन एव युद्धे जयः अस्माकं भवितुम् अर्हति । किन्तु सः गजः महाराजस्य मरणदिनतः अपि निद्राहारादिकं त्यक्त्वा दुःखे मग्नः अस्ति । इदानीं वयं किङ्कर्तव्यतामूढाः जाताः स्मः'' इति ।

मन्त्रिणां वचनं श्रुत्वा राज्ञी प्रसूतिगृहात् निर्गत्य शिशुना राजोचितं वेषं धारयित्वा तं पट्टगजस्य समीपम् आनीतवती ।

शिशुं गजस्य पुरतः शाययित्वा गजं भक्त्या प्रणम्य - ''गजराज ! भवतः स्वामिनः मरण-चिन्तां त्यजतु । पश्यतु, एषः राजकुमारः एव भवतः स्वामी अस्ति । रणरङ्गे अस्माकं शत्रूणाम् एव प्राबल्यं दृश्यते । भवान् गत्वा शत्रुसेनां पराजितां करोतु । देशस्य मानं च रक्षतु । अन्यथा एतं राजकुमारं पादैः मर्दयित्वा मारयतु'' इति ।

राज्ञ्याः वचनस्य श्रवणस्य अनुक्षणं गजः दुःखरहितः भूत्वा प्रीत्या तं शिशुं शुण्डया उत्थाप्य गृहीत्वा स्वमस्तके उपवेश्य पुनः तं मात्रे दत्त्वा युद्धाय प्रस्थितवान् ।

भयङ्करं गर्जनं कुर्वन् रणरङ्गं प्रविष्टवान् सः गजः । तस्य भीकरं रूपं दृष्ट्वा शत्रुसैनिकाः आत्मरक्षणार्थं हाहाकारं कुर्वन्तः इतस्ततः धावितवन्तः ।

गजः कोसलराजस्य समीपं गत्वा तं शुण्डया गृहीत्वा काशीं प्रति आनीय राजकुमारस्य पादनिकटे प्रक्षिप्तवान् । कोसलराजः राज-कुमारस्य पादौ स्पृष्ट्वा क्षमां याचितवान् । तदनन्तरं मन्त्रिणः तस्मिन् क्षमां दर्शयन्तः तं प्रतिप्रेषितवन्तः ।

बोधिसत्त्वः यावत् सप्तवर्षीयः जातः तावत् गजः एव काशीराज्यस्य रक्षणं कृतवान् । तदनन्तरं बोधिसत्त्वः सिंहासनारूढः अभवत्, तं च गजं पूर्ववत् पट्टगजं कृत्वा अत्यन्तं दक्षतया राज्यशासनम् अकरोत् च ।





# रामायणम्

वीथ्यां पौराः सर्वे दैन्यदृष्ट्या पश्यन्तः आसन् । केचन रथस्य पृष्ठतः अनुधावन्तः आसन् । अन्ये केचन रथं गृहीत्वा लम्बमानाः अपि आसन् । केचन रथस्य पुरतः आगत्य सारथिं सुमन्त्रम् उक्तवन्तः - ''रथं मन्दं मन्दं चालयतु । पुनः एतान् कदा द्रक्ष्यामः इति न ज्ञायते'' इति ।

दशरथः अकस्मात् अवदत् - ''मया रामः द्रष्टव्यः'' इति । ततः सः बहिः आगत्य वीथ्यां स्थितवान् । तस्य पत्न्यः अपि तम् अनुसृतवत्यः ।

''सुमन्त्र ! ईषदिव रथं स्थगयतु भवान्'' इति मन्त्रिणम् उद्दिश्य उच्चैः वदन् दशरथः अग्रे धावितवान् ।

मुखं परिवृत्य एतत् सर्वं दृष्टवान् रामः उद्गतं दुःखं सोढुं न शक्तवान् ।

अतः सः सुमन्त्रम् अवदत् - ''रथं किञ्चित् वेगेन चालयतु । एतत् दुःखदायकं दृश्यं द्रष्टुम् अहं न शक्नोमि । महाराजः भवन्तं पृच्छति चेत् कोलाहले भवदीयः ध्वनिः मया न श्रुतः इति वदतु'' इति ।

पृष्ठतः अनुसरतां जनानाम् अनुज्ञां प्राप्य सुमन्त्रः अश्वान् वेगेन चालितवान् । अश्वाः अपि सङ्कोचेन एव पदानि अग्रे निक्षिपन्तः आसन् ।

मन्त्रिणः दशरथं सान्त्वयित्वा अवदन् - ''रामादीनां प्रत्यागमनं शीघ्रं भवेदिति भवता इष्यते चेत् तैः सह भवता बहुदूरं न गन्तव्यम्'' इति ।

दशरथस्य समग्रं शरीरं स्वेदेन आर्द्रम् जातम् आसीत् । सः मन्त्रिभिः सह तत्रैव स्थित्वा यावत् रथः दृष्टिपरिधेः दूरं न गतः



तावत् रथम् एव निर्निमेषम् अपश्यत् ।

वनं प्रति रामस्य गमनस्य अनन्तरं दशरथस्य अन्तःपुरे रोदनक्रन्दनानि एव प्रतिध्वनितानि भवन्ति स्म । अयोध्यानगरं महति व्यथाग्नौ पतितम् इव आसीत् ।

आरब्धानि सर्वाणि कार्याणि अपूर्णानि एव आसन् । तेषां समापने कस्यापि आस्था उत्साहः वा सर्वथा न आसीत् । प्रलयकालः एव सन्निहितः अस्ति इति भावः आसीत् जनानाम् ।

दशरथः किञ्चिद्दूरं रामस्य रथम् अनुसृत्य गत्वा अग्रे गन्तुम् अशक्नुवन् श्रान्तः भूत्वा तत्रैव न्यपतत् । कौसल्या कैकेयी च तस्य बाहू गृहीत्वा उत्थापितवत्यौ ।

तदा दशरथः कैकेयीम् उद्दिश्य - ''अये दुष्टे ! भवती मा स्पृशतु माम् । अहं भवत्याः पतिः नास्मि । भवती त्यक्ता अस्ति मया । मम मरणस्य अनन्तरं भवत्याः पुत्रः मह्यं पिण्डदानं यदि कुर्यात् तर्हि अहं तत् न स्वीकरिष्यामि'' इति वदन् रामनाम स्मरन् रुदन् कौसल्यायाः गृहं गतवान् ।

सुमित्रा कौसल्या च दशरथस्य सान्त्वनं कृतवत्यौ ।

सूर्यास्तस्य अनन्तरं सुमन्त्रः तमसानद्याः तीरे रथं स्थापितवान् । बहवः नगरवासिनः अपि रथम् अनुसरन्तः एव आगताः आसन् । रामस्य वनगमनेन दुःखिताः ते रुदन्तः एव आसन् ।

रामः तान् बहुधा वारितवान् चेदपि ते प्रतिगमनं न अमन्यन्त ।

सुमन्त्रः अश्वान् रथात् विमोच्य जलपानं कारयित्वा स्नापयित्वा च तेभ्यः धान्यचूर्णं दत्तवान् खादनार्थम् ।

लक्ष्मणः सुमन्त्रः च रामस्य शयनाय पर्णानि आनीय कटं निर्माय प्रसारितवन्तौ । रामः सीता च तस्य उपरि शयितवन्तौ । लक्ष्मणः सुमन्त्रः च सम्भाषमाणौ एव तां रात्रिं यापितवन्तौ ।

तैः सह आगताः नागरिकाः अपि तत्रैव नदीतीरे सुप्तवन्तः । रामः सूर्योदयात् पूर्वम् एव जागरणं प्राप्य उत्थितवान् ।

गृहादिकं परित्यज्य आगतवतः जनान् दृष्ट्वा सः लक्ष्मणम् अवदत् - ''लक्ष्मण ! एतेषां जागरणात् पूर्वम् एव इतः अस्माकं निर्गमनं वरम् । अन्यथा प्रतिगमनं विस्मृत्य अस्मान् अनुसरन्तः एते वनपर्यन्तम् अपि आगच्छेयुः'' इति ।

लक्ष्मणः एतं प्रस्तावम् अन्वमन्यत । ततः रामस्य आज्ञायाः अनुगुणं विना शब्दं रथः सज्जीकृतः ।

रथं सज्जीकृत्य आनीतवन्तं सुमन्त्रं रामः उक्तवान् – ''रथं सकृत् वृत्ताकारेण भ्रामयित्वा नयतु, येन अस्माकं गमनदिशम् अभिज्ञातुम् एते अशक्ताः भवेयुः'' इति ।

सीतां रामं लक्ष्मणं च वहन्तं रथं तथैव भ्रामयित्वा ततः उत्तरस्यां दिशि चालितवान् सुमन्त्रः ।

प्रातः जागरितैः नागरिकैः न रथः दृष्टः, न वा रामादयः । ते स्वस्य अजागरूकतां तन्द्रतां च निन्दन्तः अयोध्यादिशि प्रतिगन्तुम् उद्यताः अभवन् ।

सूर्यस्य किरणाः यावत् सम्यक् आवृताः तावता रथः कोशलदेशम् अतिक्रम्य दक्षिण-दिशि प्रवहन्त्याः गङ्गानद्याः समीपं गतः आसीत् ।

शृङ्गवेरपुरसमीपे महावृक्षस्य अधः रथं स्थगितवान् सुमन्त्रः । तेन अश्वाः रथात् मोचिताः, भोजिताः च । सीता, रामः, लक्ष्मणः च वृक्षच्छायायाम् उपविश्य किञ्चित् विश्रान्तिसुखम् अनुभूतवन्तः ।

तावति काले रामस्य आगमनवार्ता रामस्य मित्रेण वनवासिनां राज्ञा गुहेन ज्ञाता । सः मित्रैः, प्रमुखैः च सह तत्र आगतवान् ।

आगच्छन्तं गुहं दूरात् एव अवलोक्य रामः लक्ष्मणेन सह तेन मेलितुम् अग्रे गत्वा तस्य आलिङ्गनं कृतवान् ।

गुहः दुःखमिश्रितेन स्वरेण – ''राम ! एतत् अरण्यम् एव भवान् अयोध्या इति



चिन्तयतु । भवान् कतिचन दिनानि अस्माकम् अतिथिः भविष्यति इति तु अस्माकं परमं सौभाग्यम् अस्ति'' इति उक्तवान् ।

आरात्रि रामः सीता च वृक्षस्य अधः एव सुप्तवन्तौ । जागरणपुरस्सरं तयोः रक्षणं कुर्वन्तं लक्ष्मणं गुहः अवदत् – ''मित्र ! भवान् अपि निद्रां करोतु । रक्षणकार्यम् अहं करोमि । वयं तु वनवासिनः । अतः समग्रायां रात्रौ जागरणं तु अस्माकं स्वभावः एव जातः अस्ति'' इति ।

किन्तु लक्ष्मणः एतत् सर्वथा न अङ्गी-कृतवान् । गुहेन सह उपविश्य मन्देन स्वरेण सः प्रवृत्तं सर्वं क्रमशः निरूपितवान् । सर्वं श्रुत्वा गुहः चिन्ताक्रान्तः अभवत् ।

रात्रिः व्यतीता । प्रातः कोकिलानां पक्षिणां च कलरवस्य कारणतः सीता रामः च

जागरितौ अभवताम् ।

रामः लक्ष्मणम् उक्तवान् - ''सूर्योदयः जायमानः अस्ति । चलाम वयम् । अल्पे एव काले गङ्गाम् अतिक्रम्य अपरं तीरं प्राप्नुयाम'' इति ।

लक्ष्मणः एतत् अङ्गीकुर्वन् वनवासिनायकं गुहं, सारथिं सुमन्त्रं च आनीतवान् ।

रामः गुहम् उद्दिश्य - ''इदानीम् एव गङ्गायाः क्रमणं करणीयम् अस्माभिः'' इति उक्तवान् ।

गुहः सहचारिणः जनान् आदिष्टवान् - ''नदीतरणाय उत्तमानां नौकानां सज्जतां कुर्वन्तु'' इति ।

रामः सुमन्त्रम् उक्तवान् - ''भवान् इतः अयोध्यां गत्वा अस्माकं कुशलवार्तां सर्वान् श्रावयतु । मातुलगृहतः भरतम् आकार्य तस्य राज्याभिषेकनिर्वर्तनव्यवस्थाम् अपि कारयतु । चतुर्दशवर्षात्मकं वनवासं समाप्य वयम् अयोध्यां प्रत्यागमिष्यामः'' इति ।

तदा सुमन्त्रेण उक्तम् - ''कोऽपि सारथिः रणभूमौ योद्धुः पतनस्य अनन्तरं रिक्तं रथं यथा नयति तथा कुर्वन् अस्मि इति भासते । येन रथेन भवतः त्रीन् अहम् आनीतवान् तं रथं रिक्तं नयामि चेत् जनानां हृदयं दुःखेन विदीर्णं न भवेत् किम् ? भवद्भिः विहीनं रथं नीत्वा मातॄणां मुखं कथं वा पश्येयम् अहम् ? अतः वनवासस्य अवधेः समाप्तिपर्यन्तम् अहम् अपि भवद्भिः सह अत्रैव स्थास्यामि । रथेन तत्र तत्र भवतः सर्वान् भ्रामयिष्यामि'' इति ।



''एतत् न शक्यते आर्य ! भवान् अत्रैव भविष्यति चेत् कैकेयी, पिता च कथं जानीयातां यत् वयं तेषाम् आज्ञायाः पालनं कुर्वन्तः स्मः इति ? अतः भवता तु इतः राजधानी प्रतिगन्तव्या एव'' इति अनुरोधपूर्वकम् उक्तवान् रामः ।

अनन्यगतिकतया अनिच्छन् अपि सुमन्त्रः एतत् अङ्गीकृतवान् । स्वस्य पारतन्त्र्यं मनसा अनिन्दत् सः ।

रामस्य इच्छानुसारं गुहः वटक्षीरम् आनीय तयोः जटां मुनीनां जटाम् इव बद्धवान् । लक्ष्मणः आदौ सीतां नौकायाम् उपवेश्य स्वयम् अपि उपविष्टवान् । तदनन्तरं रामः गुहस्य तदनुचराणां च अनुज्ञां प्राप्य नौकाम् आरूढवान् । गुहस्य बन्धुभिः नौकादण्डैः नौका चालिता ।

नौका नद्यां प्लवमाना यदा अग्रे गच्छन्ती आसीत् तदा सीता गङ्गां नमस्कृत्य – ''अयि मातः ! गङ्गे ! परमपावना भवती पापहारिणी भक्ताभीष्टप्रदायिनी च । चतुर्दशानां वर्षाणाम् अनन्तरम् अहं वनतः प्रत्यागमिष्यामि चेत् ब्राह्मणेभ्यः लक्षं गाः प्रदास्यामि । अन्नवस्त्रादीनां दानं कृत्वा भवत्याः तीरे विद्यमानेषु मन्दिरेषु सर्वेषु अपि विशेषपूजां कारयिष्यामि । अस्माकं सक्षेमं प्रत्यागमनं यथा स्यात् तथा भवती आशिषा अनुगृह्णातु कृपया'' इति प्रार्थितवती ।

सुमन्त्रः तीरे एव स्थित्वा यावत् ते दृष्टिपथात् दूरं न गताः तावत् पश्यन् एव आसीत् । यदा ते दृष्टिपथात् अपगताः तदा तस्य नेत्राभ्याम् अश्रूणि निर्गतानि ।



रामः लक्ष्मणः च मृगयानिरतौ सन्तौ बुभुक्षाम् अपि न स्मृतवन्तौ । ते कस्यचित् वृक्षस्य अधः शयनं कृतवन्तः । रामः एतावत्पर्यन्तं यद्यत् प्रवृत्तं तत्सर्वं स्मरन् स्वगतम् इव सम्भाषणम् आरब्धवान् –

''ऐषमः एव प्रथमा रात्रिः आसीत् अस्माकं वनवासस्य । इतःपरं सुमन्त्रः अपि अस्माभिः सह न भविष्यति । निद्रां त्यक्त्वा, मया लक्ष्मणेन च सीतायाः रक्षणं करणीयम् अस्ति । न जाने, दशरथस्य कियत् दुःखं जातं स्यात् इति । दुष्टा कैकेयी तु सन्तुष्टा स्यात् इदानीम् । भरतं राजानं कर्तुम् उद्युक्ता सा दशरथम् एव न मारयेत् खलु ? धर्मार्थकामादिषु कामः एव बलवान् इति भाति । नो चेत् कोऽपि पिता प्रीतिपात्रं पुत्रं वनं कथं प्रेषयेत् ? किं भरतः सुखेन राज्यशासनं

कुर्यात् ? दशरथस्य दुःखस्य मम वनप्रेषणस्य च मुख्यं कारणं सा एव । कदाचित् मात्रा मातापुत्रौ विभक्तौ कृतौ भवेताम् । अतः एव इदानीं तया पुत्रवियोगः प्राप्तः । इच्छामि चेत् न केवलम् अयोध्याम् एव, अपि तु समग्रं जगत् एव जेतुं शक्नोमि । किन्तु तत् युक्तं न । पितुः वचनस्य पालनार्थं राज्याभिषेकं परित्यजता मया युक्तम् एव आचरितम्'' इति ।

निद्राम् अलभमानम् अश्रूणि स्रावयन्तं रामं लक्ष्मणः विविधैः वचनैः समाश्वासितवान् । एतेन रामस्य विश्वासः दृढः जातः । वनवाससङ्कल्पः अपि बलवान् जातः ।

लक्ष्मणः तत्र शय्यां सज्जीकृतवान् । रामः सीता च तत्रैव शयनं कृतवन्तौ ।

प्रातःकाले उत्थाय त्रयः अपि गङ्गायमुनयोः सङ्गमस्थानं प्रयागं प्रति प्रस्थितवन्तः । मार्गे तैः भरद्वाजमुनेः आश्रमः प्राप्तः । सूर्यास्तः अपि आसन्नः आसीत् । रामः भरद्वाजं प्रवृत्तं सर्वं सङ्क्षेपेण श्रावितवान् ।

सर्वं श्रुत्वा भरद्वाजः उक्तवान् – ''सत्यम् । मया अपि श्रुतम् अस्ति – निष्कारणं भवतः पिता भवन्तं वनं प्रति प्रेषितवान् इति । अतः अद्य अत्र भवतः दर्शनम् अभवत् । अस्मिन् आश्रमे पर्णकुटीरं निर्माय अत्रैव चतुर्दश वर्षाणि यापयतु भवान् । अत्र सुखेन वासः कर्तुं शक्यते । एतत् स्थानम् अपि पूतम् अस्ति'' इति ।

एतत् श्रुत्वा रामः अवदत् – ''मुनिवर्य ! वयम् अत्र वासं कुर्मः इति अस्माकं जनाः यदि जानीयुः तर्हि अस्मान् द्रष्टुम् अवश्यम् आगच्छेयुः एव । अतः तस्य निवारणाय योग्यं स्थानं कुत्रापि अस्ति चेत् सूचयतु कृपया । सीता अपि गृहे ससुखं प्रवृद्धा अस्ति । किञ्चन सुन्दरं रम्यं स्थानं दर्शयतु । वयं तत्रैव निवत्स्यामः'' इति ।

''अत्र वस्तुम् इच्छा नास्ति चेत्, इतः दशक्रोशमिते दूरे स्थिते चित्रकूटनामके पर्वते वासः क्रियताम् । सुन्दरे तस्मिन् प्रदेशे वानरादयः निवसन्ति । बहोः कालात् आरभ्य चित्रकूटे अनेके ऋषयः तपः आचरन्तः सन्ति । अतः तत् पूतं जातम् अस्ति । ऋषिभिः सह वासः पुण्याय अपि । अतः तत् भवतां वासस्थानं भवितुम् अर्हति एव'' इति उक्तवान् भरद्वाजमुनिः ।





# भगवतः अवतारः

विदर्भदिशे कस्मिंश्चित् काले महेन्द्रः नाम प्रसिद्धः कश्चन ऐन्द्रजालिकः वसति स्म । स्वकौशलेन महाराजादीन् तोषयित्वा तेन बहवः उपाधयः प्राप्ताः आसन् । महाधनराशिम् अपि सङ्गृहीतवान् आसीत् सः । किन्तु दानशीलताकारणेन तेन अर्जितं सर्वम् अपि व्ययीकृतम् अभवत् ।

महेन्द्रस्य पुत्रः जितेन्द्रः इन्द्रजालविद्यायां पितुः अपेक्षया अधिकं प्रावीण्यं सम्पादितवान् । किन्तु तस्य काले इन्द्रजाले जनानाम् आदरः न्यूनः जातः । आयः न्यूनः चेदपि जितेन्द्रः पिता इव दानं कृत्वा निर्धनः अभवत् ।

जितेन्द्रस्य पुत्रद्वयम् । सः तौ इन्द्रजालं पाठितवान् । यतः इन्द्रजालम् आसीत् तेषां परम्परागता आजीविका । कदाचित् पुनः इन्द्रजाले जनानां प्रीतिः वर्धेत इति चिन्तनम् आसीत् जितेन्द्रस्य ।

जितेन्द्रस्य ज्येष्ठः पुत्रः रामभद्रः धनव्ययेमितिम् एव न जानाति स्म । बाल्ये पितृसकाशात् याचनां विना एव सः धनं लभते स्म । स्थितीनां परिवर्तनकारणतः याचना कृता चेदपि धनं यदा न प्राप्तं तदा सः गृहे चौर्यम् आरब्धवान् । पुत्रस्य व्यवहारं ज्ञात्वा जितेन्द्रः क्रुद्धः भूत्वा तं बहुधा दण्डितवान् । पितुः ताडनात् कुपितः रामभद्रः गृहात् बहिः गतवान् । सः पुनः कदापि न प्रत्यागतः एव ।

क्रोधाविष्टः जितेन्द्रः रामभद्रं ताडितवान् इति तु सत्यम् । किन्तु पुत्रविषये असीमा प्रीतिः तु आसीत् एव तस्य । रामभद्रस्य माता अपि पुत्रम् एव ध्यायन्ती अस्वस्था सती इहलोकत्यागं कृतवती ।

एतेन जितेन्द्रस्य द्वितीयः पुत्रः लक्ष्मीचन्द्रः एकाकी अभवत् । लक्ष्मीचन्द्रः दृढचित्तः आसीत् । सः ग्रामेषु वीथीषु भ्रमन् तत्र तत्र इन्द्रजालं प्रदर्शयन् लब्धेन स्वल्पेन आयेन सन्तुष्टः सन् दिनानि यापयति स्म ।

**पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा**



कदाचित् लक्ष्मीचन्द्रः वीथ्याम् इन्द्रजालं प्रदर्शयन् आसीत् । तत् द्रष्टुं बहवः बालाः तत्र सम्मिलिताः अभवन् । सः जानाति स्म – एतेभ्यः बालेभ्यः अधिकं धनसङ्ग्रहणं न शक्यम् इति । तथापि स्वकौशलेन सः तान् अतोषयत् ।

तावता पार्श्वगृहे एव कश्चन बालः उच्चैः रुदन् दृष्टः तेन । रोदनशब्दं श्रुत्वा लक्ष्मीचन्द्रः इन्द्रजालप्रदर्शनं स्थगयित्वा तत् गृहं प्रविष्टवान् । तत्र वर्षचतुष्टयस्य पुत्रं ताडयन्ती काचित् गृहिणी दृष्टा तेन ।

सः गृहिणीं पृष्टवान् – "आर्ये ! भवती एतं बालं किमर्थम् एवं ताडयति ?" इति ।

"यदा एतस्य पिता अस्वस्थः जातः आसीत् तदा मया सङ्कल्पः कृतः आसीत् – मम पत्युः अस्वास्थ्यं दूरीभवति चेत् गृहसदस्याः वयं सर्वेऽपि सप्ताहं यावत् मध्याह्नपर्यन्तम् उपवासम् आचर्य, भगवतः दर्शनं कृत्वा एव भोजनं करिष्यामः इति । भगवत्कृपया पत्युः अस्वास्थ्यम् अपगतम् । कथञ्चित् षट् दिनानि गतानि । अद्य उपवासस्य अन्तिमं दिनम् । किन्तु मध्याह्नपर्यन्तम् एतम् अवरोद्धुम् एव न शक्यते इति भासते" इति उक्तवती गृहिणी ।

बालः बुभुक्षया रोदनं कुर्वन् आसीत् । गृहिण्या तु भगवतः दर्शनाय गन्तव्यम् आसीत् । सान्त्वनं कृतं चेदपि सः बालः रोदनं न त्यक्तवान् । अतः सा तं ताडयति ।

'बालाय खादितुं किमपि अदत्त्वा ताडनम् औचित्यं न आवहेत्' इति चिन्तयन् लक्ष्मीचन्द्रः गृहिणीम् उक्तवान् – "अम्ब ! जनाः वदन्ति – बालेषु देवः निवसति इति । एतस्मिन् बाले निवसन्तं देवं द्रष्टुम् अशक्ता भवती मन्दिरे कीदृशं देवं द्रष्टुं शक्नुयात् ?" इति ।

एतस्य वचनैः उद्विग्ना सा गृहिणी – "मन्दिरस्थे भगवति आनादरः क्रियते इत्यतः एव भवतः जीवितम् एवंविधम् अस्ति । मम पुत्रे भवान् भगवन्तं खलु पश्यति ? अतः कञ्चित् समयं भवान् अस्य निर्वहणं करोतु । तावता अहं भगवद्दर्शनं कृत्वा प्रत्यागमिष्यामि । आगत्य भवते अपि भोजनं दास्यामि" इति ।

लक्ष्मीचन्द्रः एतत् अङ्गीकृत्य मधुरैः वचनैः, इन्द्रजालप्रतिभया च तं बालम् आनन्दितं कृतवान् । गृहिणी प्रत्यागत्य लक्ष्मीचन्द्रस्य श्लाघनं कृत्वा तस्मै अपि भोजनं दत्तवती ।

भोजनानन्तरं लक्ष्मीचन्द्रः गृहिणीम् उक्तवान् – "अम्ब ! यं भगवन्तं भवती

पुत्रात् अपि श्रेष्ठं भावयति सः कुत्र अस्ति ? तस्य दर्शनं करणीयम् इति मम अपि महती इच्छा अस्ति'' इति ।

तदा सा हसन्ती - ''सः भगवान् न हि सामान्यः । सः तु प्रत्यक्षदेवः एव । भवता सह सः सम्भाषणं करोति अपि'' इति वदन्ती आत्मना दृष्टस्य जनस्य वासस्थानं सूचितवती ।

लक्ष्मीचन्द्रस्य कौतुकम् इतोऽपि प्रवृद्धम् । यत्र सः सशरीरः भगवान् विराजमानः अस्ति इति तया सूचितम् आसीत् तत्र गतवान् सः । तत्र जनानां महासम्मर्दः आसीत् । सर्वे मौनेन उपविष्टवन्तः आसन् । तेषां पुरतः उन्नते स्थाने श्मश्रुलः कश्चित् साधुः आसीनः आसीत् । 'सात्त्विकमार्गेण एव गन्तव्यम् अस्माभिः सर्वैः' इति सर्वान् उपदिशति स्म सः साधुः । विपत्सु लग्नान् जनान् निकटम् आहूय प्रबोधयति स्म - 'जनानां कष्टनिवारणाय एव मम अवतारः एषः' इति । मध्ये मध्ये सः मन्त्रजपेन भस्म सृष्ट्वा तेषाम् उपरि विकिरति स्म अपि ।

कदाचित् निराधारतया वायौ डयमानः सः तस्याम् एव स्थितौ निश्चलः तिष्ठति स्म । एतेन उपस्थिताः भक्ताः - 'हे परमात्मन्, उद्धरतु अस्मान्' इति निवेदयन्ति स्म ।

एतत् सर्वं विचित्रम् इव अभासत लक्ष्मीचन्द्राय । यतः साधुना ये चमत्काराः प्रदर्श्यन्ते तान् सर्वान् सः अपि जानाति स्म । 'एषः सामान्यः कश्चन ऐन्द्रजालिकः एव । इदानीम् अत्र भगवान् सञ्जातः अस्ति । एतस्य रहस्यं मया ज्ञातव्यम् एव' इति विचिन्त्य लक्ष्मीचन्द्रः अर्धरात्रे तेन साधुना मिलितः ।



''भवान् कः ?'' इति साधुना पृष्टम् ।

''अहं कश्चन ऐन्द्रजालिकः अस्मि । मया भवतः चमत्काराः सर्वे अवलोकिताः । तान् जनाः महिमविशेषं मन्यन्ते । एतान् एव चमत्कारान् अहम् अपि प्रदर्शयन् अस्मि । तथापि मया पूर्णोदरं भोजनं न प्राप्यते । भवन्तं तु भगवन्तं मन्यन्ते जनाः । एतत् कथं सम्भवति इति जिज्ञासया अहम् अत्र आगतवान् अस्मि'' इति उक्तवान् लक्ष्मीचन्द्रः । तस्मिन् दिने प्रवृत्तां घटनाम् अपि सः तं निवेदितवान् ।

''अत्र महत् रहस्यं किमपि नास्ति । अहं तु दैवांशसम्भूतः अस्मि । सहजतया मया याः विद्याः प्राप्ताः ताः भवान् परिश्रमेण अधिगतवान् अस्ति । तावान् एव भेदः आवयोः चमत्कारस्य'' इति उक्तवान् साधुः ।

''किम् उपकरणानां साहाय्यं विना एव भवान् चमत्कारान् दर्शयेत् ? अहम् इदानीं

मम अङ्गुलिं कर्तयामि । तां किं भवान् पूर्ववत् कुर्यात् ?'' इति पृष्टवान् लक्ष्मीचन्द्रः ।

''कुतो न ? अवश्यं तथा कर्तुं शक्नोमि'' इति साधुना उत्तरं दत्तम् ।

तदनुक्षणम् एव लक्ष्मीचन्द्रः स्वाङ्गुलीं खण्डीकृतवान् । तदनन्तरं साधुः ताम् अङ्गुलीं योजयित्वा पूर्ववत् कृतवान् । रक्तस्रावः अपि अवरुद्धः अभवत् ।

''एतत् तु सर्वथा आश्चर्याय । वस्तुतः एतां विद्याम् अस्मत्परिवारसदस्येभ्यः ऋते अन्यः कोऽपि न जानाति एव'' इति उक्तवान् लक्ष्मीचन्द्रः ।

तदा साधुः आश्चर्येण पृष्टवान् - ''भवतः नाम लक्ष्मीचन्द्रः इति खलु ?'' इति ।

''आम्, सत्यम् । एतत् भवान् कथं जानाति ?'' इति पृष्टवान् लक्ष्मीचन्द्रः ।

''अहं भवतः अग्रजः रामभद्रः । भवतः प्रश्नानाम् उत्तरम् अहम् इदानीं सुष्ठु वदामि । भवता स्वस्य इन्द्रजालकौशलेन बालस्य बुभुक्षा विस्मारिता । सः बालः भवति भगवन्तं पश्यति । किन्तु ज्येष्ठानां विषये एवं न सम्भवति । अहम् आत्मानं भगवन्तं कथयित्वा इन्द्रजालं कृत्वा भगवान् एव अभवम् । भवान् ऐन्द्रजालिकरूपेण स्वस्य परिचयम् उपस्थापयन् इन्द्रजालं प्रदर्शितवान् । अतः भवान् सामान्यः ऐन्द्रजालिकः एव अभवत् । जनाः आवयोः उभयोः अपि इन्द्रजालं पश्यन्तः सन्ति । किन्तु तेषां संशयः न भवति । अस्मिन् जगति सुखजीवनं कर्तुं केवला विद्या अपर्याप्ता । मधुरैः वचनैः आकर्षणं क्रियते चेत् एव अधिगता विद्या लोकप्रिया भवति । देवोऽस्मि इति कथनम् एव मम आजीविकायाः मुख्याधारः । यावत् एते जनाः मूर्खाः भवन्ति तावत् मम कापि न्यूनता न भविष्यति । इदानीं भवतः संशयः निवारितः खलु । भवान् गन्तुम् अर्हति'' इति अवदत् सः साधुः ।

लक्ष्मीचन्द्रः ततः निर्गतवान् । तदनन्तरं सः कुत्र गतः इति कोऽपि न ज्ञातवान् । किन्तु विदर्भदेशे पूर्वस्यां दिशि कस्मिंश्चित् लघुग्रामे भगवतः अवतारः जातः अस्ति इति वार्ता सर्वत्र प्रसृता । तस्य बहुविधाः महिमानः जनैः श्रूयन्ते स्म । तस्य दर्शनाय बहुदूरतः समूहशः जनानाम् आगमनम् आरब्धम् ।



चित्रम् - गान्धि-अय्यः

# अपराजेयः गरुडः

चन्द्रपुर्याः सीमायां युवानः अदृश्याः भवन्तः सन्ति इत्येषा रामसिंहेन आनीता वार्ता व्याकुलताम् अजनयत् । नरेन्द्रदेवः रवीन्द्रदेवम् आप्तपुरुषं च वदति यत् मया स्वमित्रं वज्रपुरीराजं विक्रमसिंहं प्रति गुहायां मिलतु इति पत्रं प्रेषितम् अस्ति इति । प्रधानमन्त्री पुष्पराजः नरेन्द्रदेवेन मेलितुं गच्छति ।

रवीन्द्रदेवः वज्रपुर्याः प्रधान-मन्त्रिणा मिलति ।

राजदूतः सन् अत्र आगतवान् अस्ति सः ।

भवतः पितुः सन्देशः विक्रमसिंहेन प्राप्तः अस्ति । राज्याभिषेकार्थं चन्द्रपुरीगमनात् पूर्वं तेन अहम् अत्र प्रेषितः ।

भवदागमनम् अस्माकं प्रसन्नतायै जातम् । एतत् मम पितुः सम्मानवर्धकम् अस्ति अपि । किन्तु...

प्रासादे करणीयं भवतः स्वागतं तु अस्यां पर्वतगुहायां क्रियमाणम् अस्ति इति तु अस्माकं दुःखाय ।

वत्स ! भवते तथा भासते । किन्तु शीघ्रमेव परिवर्तनं भविष्यति इत्यत्र मम महान् विश्वासः अस्ति ।

चन्द्रपुर्यां किं सञ्जातम् इति तु वयं न जानीमः । अस्माकं राजा अवश्यं भवतां साहाय्यं विधास्यति ।

आन्तरिकदृष्ट्या मया अवलोकितम् । प्रतिवेशीनि राज्यानि जित्वा विक्रमसिंहः सम्राट् भविष्यति । रवीन्द्र ! चन्द्रपुरीवशीकरणे तस्य साहाय्यं करोतु भवान् । तदेव हिताय भवेत् इति मम मतम् ।


परिवर्तनम् अवश्यं भविष्यति । शारीरकपरिवर्तनम् अपि भवेत् इति आशा आसीदिति भवता नोच्यते स्म किम् ? इतः प्रतिगत्य अहं राज्ञा सह वार्तालापं करिष्यामि ।
ते अस्मत्साहाय्यं करिष्यन्ति इत्यत्र संशयः नास्ति ।
श्रीमन् । भवन्तम् आपृच्छामहे ।


चन्द्रपुर्याम् आदित्यारुणयोः विवाहस्य सन्नाहः क्रियमाणः अस्ति । तदनन्तरं राज्याभिषेकः भविष्यति । अतिथयः तत्र प्राप्नुवन्तः सन्ति ।


कार्यक्रमे आदौ उपस्थितेषु अतिथिषु अन्यतमः अस्ति वज्रपुर्याः राजा विक्रमसिंहः । सः राज्ञः महेन्द्रदेवस्य निकटं नीतः ।


विक्रमसिंह ! स्वागतं भवतः । चिरात् मेलनम् आवयोः ।
मित्र ! भवान् तु राजधान्याः बहिः गतवान् आसीत् । भवतः हननप्रयासः विहितः इति वार्ता श्रुता मया ।


कोऽपि मम सिंहासनम् आक्रान्तुम् इच्छति स्म । परं च समये तस्य कुतन्त्रं विफलीकृतम् ।
एतत् सर्वं मया न ज्ञातम् आसीत् । भवान् निरापदः इति तु प्रसन्नतायै ।


कतिचन परिचितानि एव मुखानि न दृश्यन्ते । नरेन्द्रदेवः तस्य पुत्रः च कुत्र गतौ ?
मां पदच्युतं कर्तुं कुतन्त्ररचने मग्नाः आसन् एते । अस्मत्प्रधानमन्त्रिणः हननकृत्ये अपि नरेन्द्रदेवस्य हस्तक्षेपः आसीत् इति मम संशयः ।


परन्तु सः भवतः श्यालः आसीत् । तस्य एतादृशः व्यवहारः ...


वस्तुतः, रवीन्द्रदेवः मम उत्तराधिकारी भविष्यति इति मम आशा आसीत् । किन्तु पिता पुत्रः च उभावपि महत्त्वाकाङ्क्षिणौ जातौ । पिता तु मन्त्रतन्त्रादिकं प्रयोक्तुम् उद्युक्तः आसीत् ।
तदनन्तरं किम् अभवत् ?


प्रधानमन्त्रिणः पुत्रेण आदित्येन मम साहाय्यं कृतम् । सः मां राजधान्याः बहिः अनयत् । नरेन्द्रदेवः मकरमुखेन गृहीतः पादविहीनः अभवत् ।


मकरः ?
महेन्द्रदेवस्य हिताय मकरेण सह आत्मना कृतं साहसमयं सङ्घर्षं स्मरति विक्रमसिंहः ।










मकरेण सह सः अपि अन्तः प्रविश्य कथञ्चित् मकरं पराजितवान् ।

उत्तमावसरे प्राप्ते तेन छुरिकया मकरस्य उदरे आघातः कृतः ।

उच्चैः आक्रोशं कुर्वता तेन अहं नद्याः तीरं प्रति गमनाय सूचितः । यतः जलं रक्त-वर्णं जातम् आसीत् । तस्य साहसं कदापि न विस्मरामि अहम् ।

अनुवर्तते

# पश्चिमवङ्गीया दुर्गापूजा

पश्चिमवङ्गराज्ये आश्वयुजमासः (सप्टम्बर्-अक्टोबर्मासयोः वर्तमानः) वर्षस्य प्रमुखभागायते । यतः अस्मिन्नेव मासे महोत्साहदायकं नवरात्रोत्सवम् आचरन्ति तत्रत्याः ।

दुर्गापूजायाः आचरणस्य परम्परा बह्वीभ्यः शताब्दीभ्यः पूर्वम् एव आरब्धा । द्वादशशताब्द्याः पूर्वात् एव आरभ्य आचर्यते स्म दुर्गापूजा इति ज्ञायते भारतीयस्य साहित्यस्य अध्ययनेन । एतस्मात् स्पष्टं यत् आ बहोः कालात् अविच्छिन्नतया उत्सवोऽयम् आचर्यमाणः अस्ति तत्र इति ।



पूर्वं भूस्वामिनः वाणिज्यकाराः च स्वगृहेषु पूजाम् आयोजयन्ति स्म । तत्सम्बद्धं व्ययं स्वयं वहन्ति स्म च । जातिभेदं, धनिकदरिद्रभेदं च विना सर्वेऽपि प्रतिवेशिनः पूजास्थाने उपस्थिताः भवन्ति स्म । सर्वेषां स्वागतं, पूर्णोदरं भोजनं च भवति स्म । किन्तु अद्यत्वे सा पूजा जातिपरिधौ एव आचर्यते जनैः स्वयम् एव ।

एतदर्थं घटितेषु सङ्घेषु, समितिषु, समूहेषु च पूजामाध्यमेन क्रमशः शीलविकासः जायते स्म पूर्वम् । सामाजिकधार्मिकप्रतीकभूतः एष उत्सवः अत्युन्नतां प्रगतिं प्राप्नोति स्म अपि । किन्तु इदानीम् एतत् परिस्थितिवशात्, वैभवाडम्बरादिप्रदर्शनकारणं जातम् अस्ति ।

पूर्वं दुर्गा एका एव पूज्यते स्म । किन्तु इदानीं सा परिवारसहिता दृश्यते । पत्युः शिवस्य, पुत्रयोः गणेशकार्त्तिकेययोः समक्षे दुर्गायाः मूर्तिः प्रमुखतया यथा भासेत तथा कृत्वा दिव्यसन्निधिं चित्रयन्ति । पूजा दिनत्रयं यावत् भवति । दुर्गायाः, सरस्वत्याः, लक्ष्म्याः, गणेशस्य, कार्त्तिकेयस्य च मूर्तीः द्योतमानेन दीपालङ्कारेण सज्जीकृत्य, विशाले पटमण्डपे प्रतिष्ठापयन्ति । एतत् दृश्यं सहजतया समग्रे राज्ये जनानां चित्तम् आकर्षति ।

अन्तिमे दिने अलङ्कृतेषु वाहनेषु सवाद्यघोषं वर्णरञ्जितशोभायात्राद्वारा नीत्वा जले मूर्तयः निमज्ज्यन्ते ।

**न्यूट्रिनूस्पर्धा - १ उत्तराणि**

१. (ई) अटकमामरुभूमिः

२. (आ) दामोदरा

# पठ्यतां भवताम् पठ्यतां भवताम्

## भवदर्थकं विज्ञानम्



### विनाशं प्रति पदनिक्षेपः

अद्यत्वे वातावरणप्रदूषणविषये जनाः प्रज्ञावन्तः प्रतीयन्ते । ते स्वस्य सुतान् स्वस्थगेहस्य उत्तराधिकारिणः कर्तुम् इच्छन्ति इत्यतः वातावरणरक्षणाय विभिन्नानि तन्त्राणि चिन्तयन्तः सन्ति । किन्तु ये प्रगतिसङ्केतत्वेन मन्यन्ते ते मानवस्य अद्भुताः आधुनिकाः आविष्काराः एव अद्य परिसरे महतीं हानिं जनयन्तः सन्ति इति तु महते खेदाय । कर्मागाराणि, वाहनानि, असङ्ख्यानि यन्त्रोपकरणानि च वातावरणस्य, परिसरस्य च मालिन्यस्य कल्पने प्रमुखं पात्रं वहन्ति ।

अङ्गाराम्लादीनां हानिजनकवायूनां प्रवर्धनेन वातावरणस्थितयः व्यत्यस्ताः भवन्ति इति तज्ज्ञानाम् अभिप्रायः । संशोधकाः अभिप्रयन्ति यत् २०५० तमवर्षाभ्यन्तरे परिसरपरिवर्तनैः १५ - ३५ % निसर्गः पूर्णतया विनष्टः भविष्यति इति ।

वातावरणे उष्णतांशः न्यूनीकरणीयः चेत् प्रदूषणं सर्वथा परिहरणीयम् । वातावरणस्य पुनश्चेतनव्यवस्थां परिकल्प्य महता प्रमाणेन जागतिकस्तरे निसर्गसंरक्षणाय प्रयत्नाः विधेयाः च ।



## भवतां परिसरः

### सागरे प्रकाशदीपः

हवायीद्वीपं परितः समुद्रेषु निशाचरः अश्वपुच्छीयमीनः (स्क्विड) दृष्टिगोचरः भवति । सः अन्यमीनेभ्यः विभिन्नः एव । अविभाज्येन कान्तिदीपेन युक्तः भवति इति तु एतस्य विशेषः ।

तदीयः एषः कान्तिदीपः भवति आत्मरक्षणाय । समुद्रतले महाप्राणिनः आहारस्य प्रतीक्षायां भवन्ति । ऊर्ध्वतले भ्रमतां च्छाया ज्ञायते तैः । तद्बलेन ते आहारं गृह्णन्ति । तादृशं च्छायायाः भानं निवारयति एषः दीपः । एषः दीपः प्रतिफलनजीवांशैः निर्मितः सन् रजतवत् प्रतिफलति । ते च जीवाणवः अश्वपुच्छीयमीनेन सह सहजीवनसम्बन्धवन्तः भवन्ति । यदा मीनः कान्तिम् उत्पादयति तदा तेषां सक्षेमजीवनाय पूरकं वातावरणं निर्मितं भवति । एषः प्राणी परमाण्वाविष्काराणां साहाय्याय भवेत् इति विज्ञानिनाम् अभिप्रायः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?



### *लघुकायः सागराश्वः*

**अ**श्वः सागरे जीवति किम् इति आश्चर्येण पृच्छेयुः खलु भवन्तः ? 'समुद्राश्वः' नाम जीवी तत्र जीवति इति तु सत्यम् एव । किन्तु सः भवति शृङ्गरहितः । 'हिप्पोकेम्पस्डेनिस्' नामकस्य एतस्य वैशिष्ट्यं नाम एषः आकारेण भवति लघुकायः ।

एषः जीवी ऐदम्प्राथम्येन केनडादेशे क्यूबेक्नामके स्थाने मेक्गिल्विश्वविद्यालयस्य विज्ञानिभिः हवायीद्वीपस्य विषप्जन्तुसङ्ग्रहालये अभिज्ञातः । इण्डोनेशियातीरे फ्लोरेससागरात् प्राप्तानां शिलामणीनाम् अधोभागे एषः प्राणी दृष्टिगोचरः जातः ।

समतोलनरक्षणाय स्वपुच्छम् उपयुङ्क्ते अयम् । यतः अनेन १३ - ९० मीटर्मिते गभीरे जले वायुः सम्मुखीकरणीयः भवति । एतस्य समग्रशरीरस्य दैर्घ्यं तु अर्धाङ्गुलमात्रम् एव ।

## अभिवर्ध्यतां ज्ञानशक्तिः

***एतस्य मासस्य प्रश्नाः भवन्ति सञ्चार-परिवहणविषयम् अधिकृत्य***

१. ऐदम्प्राथम्येन कस्मात् स्थानात् कुत्र रेल्वेमार्गः निर्मितः? कस्मिन् च वर्षे ?

२. कः आधुनिकभारतस्य प्रथम - विमानयात्रिकत्वेन प्रसिद्धः? तेन कुतः प्रयाणं कृतम्? तच्च कदा ?



३. देहलीनगरस्य विमान- स्थानकं केन नाम्ना प्रसिद्धम् अस्ति ?

४. भारतस्य नौकापिता इति प्रसिद्धः देशभक्तः कः ?

५. 'शिकार'यात्रा करणीया चेत् कुत्र गन्तव्यम् ?

*(उत्तराणि ६६ तमे पृष्ठे)*

## न्यूट्रिन्स्पर्धा - 9

एतस्याः सञ्चिकायाः अन्तिमावरणपृष्ठे स्थिता न्यूट्रिन्विज्ञापिका सम्यक् दृश्यताम् । ततः सञ्चिकां पार्श्वे स्थापयित्वा विज्ञापिकायां महालेक्टोमध्ये कियन्तः पदार्थाः सन्ति इति अभिज्ञाय तान् च कागदखण्डे विलिख्य नाम, जन्मदिनाङ्कं, कक्ष्यां, विद्यालयनाम, समग्रं गृहसङ्केतं (पिन्कोड्सहितं) चापि **अक्टोबर् मासस्यास्य ३१ तः पूर्वं**
CHANDAMAMA INDIA LIMITED No. 82, Defence Officers Colony Ekkatuthangal, **CHENNAI - 600 097**
इत्यस्मै सङ्केताय प्रेष्यताम् ।

**आकर्षकं पारितोषिकं* प्रतीक्षते भवन्तम्**






*Conditions apply*



# चित्रशीर्षिकास्पर्धा



MAHANTESH C. MORABAD

अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



MAHANTESH C. MORABAD

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'अगस्ट्'मासस्य शीर्षिकाप्रेषिका -

**(सौ.) लोमा आचार्या**

१०४, गणेश अपार्ट्मेण्ट्स्, १ अङ्कः,

पङ्वालनगरम्, याग्ले एस्टेट्

**थाने (पश्चिम) - ४०० ६०४**

**(महाराष्ट्र)**

**पुरस्कृता शीर्षिका**





**स्मितवदने संलग्ने फलसञ्चयने ।**
**तरुवरप्रिया व्यग्रास्ति जलसेचने ।।**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. मुम्बईतः ठाणे, १८५३ तमे वर्षे ।

२. प्रसिद्धः उद्यमपतिः जे.आर्.डी. टाटा । मुम्बयीतः कराचीं प्रति, १९३२ तमे वर्षे ।

३. इन्दिरागान्धि-अन्ताराष्ट्रियविमान-स्थानकम् इति ।

४. वी.ओ. चिदम्बरं पिल्ले ।

५. श्रीनगरस्य दालसरोवरः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# इन्धनसञ्चयस्य रहस्यम् !



सा काचित् विचित्रा कार्चालनस्पर्धा आयोजिता आसीत् कार्यानर्निर्मातृभिः । अत्र स्पर्धार्थिनः नगरस्य रेल-स्थानकतः विमानाश्रयपर्यन्तं तस्याः संस्थायाः अत्याधुनिक-विन्यासोपेतं कार्यानं चालयेयुः इति आसीत् नियमः ।

प्रस्थानस्थानं गम्यं च निर्दिष्टम् आसीत्, किन्तु मार्गः आसीत् ऐच्छिकः । सर्वप्रथमं यः गम्यं प्राप्नोति सः विजयी इति न गण्यते स्म तत्र । प्रत्युत प्रयाणावसरे येन न्यूनतमस्य इन्धनस्य उपयोगः कृतः भवति सः एव विजेता इति निर्णीयते इति घोषितम् आसीत् स्पर्धायोजकैः । स्पर्धान्ते रामः गोविन्दः चेति उभौ चितौ । तयोः कतरस्य भवेत् जयः इति परीक्षा प्रवृत्ता ।

रेलस्थानकतः विमानाश्रयपर्यन्तः कश्चन तादृशः मार्गः आसीत्, यश्च वक्रः समीपतरः च आसीत् । अपरः मार्गः ऋतुः, विशालः च । किन्तु ऋजुना मार्गेण गन्त्रा तु बहूनि मार्गावरोधकसूचकानि (ट्राफिक सिग्नल्स्) क्रमितव्यानि भवन्ति स्म । वक्रमार्गेण गमने एषः क्लेशः न आसीत् ।

गोविन्दः वक्रेण निकटतरेण च मार्गेण प्रस्थितः । रामः ऋजुमार्गेण गतवान् । ऊहानुगुणं गोविन्दः एव आदौ प्राप्तवान् गम्यस्थानम् । किन्तु आश्चर्यं नाम जयः आसीत् रामस्य एव !! यतः गोविन्देन यावत् इन्धनम् उपयुक्तम् आसीत् ततोऽपि अल्पम् उपयुक्तम् आसीत् रामेण ।

प्रशस्तिस्वीकरणावसरे रामः विवृतवान् - ''निकटस्थमार्गेण गमनं इन्धनसञ्चये सहायकं भवति इति तु भ्रान्तिः एव । गोविन्दः सामीप्यकारणतः वक्रमार्गेण गच्छन् मध्ये मध्ये वामतः दक्षिणतः च परिवृर्तिं कुर्वन् स्थगयन्, वेगं च वर्धयन् यन्त्रस्य शक्तिं व्यर्थतया उपयुज्य अधिकम् इन्धनम् उपयुक्तवान् । अहं विशालमार्गेण समवेगेन यानं चालयन्, याने स्थगिते यन्त्रं चापि स्थगयन् इन्धनव्ययं न्यूनीकृतवान् । यद्यपि मया विलम्बेन प्राप्तं, तथापि इन्धनरक्षणे अहमेव सफलः अभवम्'' इति ।

सत्यम् एव यत् वस्तुतः इन्धनव्ययः चालनक्रमं, मार्गचयनं च अवलम्बते इति ।

